अर्हम्

श्रीयशोविजयजैनग्रन्थमाला [ ३२ ]

श्रीभावदेवसूरिविनिर्मितं

# पार्श्वनाथचरित्रम् ।

शास्त्रविशारदजैनाचार्यश्रीविजयधर्मसूरि-
पादाम्भोजचञ्चरीकायमाणाभ्यां
श्रावकपं०-हरगोविन्ददास-बेचरदासाभ्यां संशोधितम् ।

तच्च

आग्रानगरवास्तव्य-श्रेष्ठिवर्य-लक्ष्मीचन्द्र-वैद्
इत्येतेषां साहाय्येन

वाराणस्यां

श्रेष्ठिभूराभाईतनुजहर्षचन्द्रेण निजधर्माभ्युदययन्त्रालये
मुद्रितं प्रकाशितं च ।

वीरसंवत् २४३८ ।

YASHOVIJAYA JAINA GRANTHAMALA, 32



*THE*

# PARSHVANATH CHARITRA

OF

## SHREE BHAVA DEVA SURI.



EDITED BY

SHRAVAK PANDIT HARGOVINDDAS

AND

SHRAVAK PANDIT BECHARDAS,

MOST DEVOTED SERVANTS OF

HIS HOLINESS SHASTRA VISHARAD JAINACHARYA

SHRI VIJAYA DHARMA SURI.



WITH

THE PECUNIARY HELP OF

SHETH LAKSHMICHAND VAIAD,

OF

AGRA.



PRINTED AND PUBLISHED

BY

HARSHCHAND BHURABHAI,

Proprietor of Dharmabhyudaya Press.

BENARES.



Veer-Era, 2438.



# प्रस्तावना ।

अस्य भावाङ्कस्य श्रीपार्श्वनाथचरितनाम्नो महाकाव्यस्य कवितारः कवितारकतारकपतयोऽनवद्यत्रैविद्यविद्याविशारदाः कालिकाचार्यसन्तानीयाः श्रीभावदेवसूरयः कर्हि कं मण्डलं मण्डयांचक्रिवांसः ?, इति कथंकथिकानां कथंकथिकता नोत्थातुमवकाशवती, यतः स्वयमेव ते सूरयः स्वं परिचाययन्ति, तथाहि—

"आसीत् स्वामिसुधर्मसन्ततिभवो देवेन्द्रवन्द्यक्रमः
श्रीमान् कालिकसूरिरद्भुतगुणग्रामाभिरामः पुरा ।
जीयादेष तदन्वये जिनपतिप्रासादतुङ्गाचल-
भ्राजिष्णुर्मुनिरत्नगौरवनिधिः खण्डिल्लगच्छाम्बुधिः ॥ ४ ॥
तस्मिंश्चान्द्रकुलोद्भवः कुवलयोद्बोधैकबन्धुर्यशो-
ज्योत्स्नापूरितविष्टपो विधुरिव श्रीभावदेवो गुरुः ।
यस्याऽऽख्यानसमानमेष बहुशो व्याचक्ष्यमाणोऽधुना
गच्छोऽगच्छदतुच्छगूर्जरभुवि प्रष्ठां प्रतिष्ठामिमाम् ॥ ५ ॥
मनसि घनविवेकस्नेहसंसेकदीप्तो
द्युतिमतनुत यस्य ज्ञानरूपः प्रदीपः ।
असमतमतमांसि ध्वंसयन्नञ्जसाऽसौ
न खलु मलिनिमानं किन्तु कुत्राऽपि चक्रे ॥ ६ ॥
श्रीमांस्ततो विजयसिंहगुरुर्मुनीन्द्र-
मुक्तावलीविमलनायकतां वितेने ।
ज्योतिः सदुज्ज्वलतरं विकिरन् धरित्र्यां
चित्रं न यस्तरलतां कलयांचकार ॥ ७ ॥
दाक्षिण्यैकनिधिर्व्यधान्न सहजे देहेऽप्यहो ! वाञ्छितं
कारुण्यामृतवारिधिर्विनिदधे गुप्तौ स्वकीयं मनः ।
शान्तात्माऽनुचरं चिरस्य विनिजग्राहेन्द्रियाणां गणं
यो विज्ञातसमस्तवस्तुरभवत् तुल्यश्च हेमा-ऽश्मनोः ॥ ८ ॥
तदीयपट्टेऽजनि वीरसूरिर्यन्मानसे निर्मलदर्पणाऽऽभे ।
निरूपयामास सरस्वती सा त्रैविद्यविद्यामयमात्मरूपम् ॥ ९ ॥
सदाभ्यासावेशप्रथितपृथुमन्थानमथना-

द्वात्रिंशत्तर्काब्धेर्विबुधपतिसिद्धेशमहितम् ।
थद्दीयं वाग्ब्रह्माऽमृतमकृत दर्पज्वरभर-
प्रशान्तिं निःशेषक्षितिवलयवादीन्द्रमनसाम् ॥ १० ॥
तस्मादभूत् संयमराज्यनेता
मुनीश्वरः श्रीजिनदेवसूरिः ।
यो धर्ममारोप्य गुणे विशुद्ध-
ध्यानेषुणा मोहरिपुं बिभेद ॥ ११ ॥
आद्यनामक्रमेणैवं प्रसर्पति गुरुक्रमे ।
पुनः श्रीजिनदेवाऽऽख्या बभूवुर्वरसूरयः ॥ १२ ॥
येषां पादारविन्दानरुणनखशिखारागभूयोऽभिरज्य-
ल्लक्ष्मीलीलानिवासान्विमलगुणभृतो भेजिरे राजहंसाः ।
आकृष्टानेकलोकभ्रमरकृतनमस्कारझङ्काररम्यो
येषामद्यापि लोके स्फुरति परिमलोऽसौ यशोनामधेयः ॥१३॥
तेषां विनेयविनयी बहु भावदेव-
सूरिः प्रसन्नजिनदेवगुरुप्रसादात् ।
श्रीपत्तनाऽऽख्यनगरे रविविश्व( १३१२ ) वर्षे
पार्श्वप्रभोश्चरितरत्नमिदं ततान ॥ १४ ॥"

अतः स्पष्टमेवाऽवसीयते यत्, ते कालिकाचार्यकुलतिलकाः श्रीभावदेवसूरयस्त्रयोदश-चतुर्दशशताब्दीमध्यकालिका एवेति।

एतच्चरितावलोकनेनैव चैतेषां वैयाकरणचणभूषणत्वम्, कविकुलगुरुत्वम्, लौकिकशास्त्रावलोकनरसिकत्वम्, सामुद्रिकशास्त्रसिद्धमुद्रत्वम्, चिकित्सारहस्याभिज्ञातृत्वम्, श्रीजिनागमपारगामित्वं चावगम्यते सुधीभिः ।

निर्वर्णितं चात्र चरिते, संसाराऽसाराऽऽरम्भरम्भातरुमूलोन्मूलने दुर्वारवारणत्वमाबिभ्रतः, विषमाऽकृशशमनायमानक्रोधकृशानुशमने प्रचुरपानीयतां समादधतः, दुर्वहाऽहङ्कारहुङ्कारहिमालयहिमानीनिकरद्रवणे संततसप्तसप्तित्वमनुसरतः, गहनाऽमेयमायावंशवंशघटाविघटने खरतरधाराधरपरशुत्वमाश्रयतः दुःक्षोभलोभाऽपारावारपारपानीयप्रशोषणे ज्वलज्ज्वालवडवानलतामाकलयतः, स्वकीयसर्वसहत्वेन सर्वसहां सर्वसहामपि जडीकुर्वाणस्य, संबम्भ्रम्य प्रवासिन इव विचित्राचित्रचरित्रा-

ऽगमदुर्गमनवभवगहनगहनम्, प्रमामथ्य पीताम्बरस्येव निजपवित्रजी-वनजीवासहितसद्ध्यानामन्दमन्दराचलेन दुरवगाहागाधदशमभवार्णवम्, ततः सम्प्राप्तं विमलकेवललक्ष्मीलीलाविलासित्वं लोकोत्तररङ्गरङ्गितोत्तुङ्ग-चङ्गप्रासादात् समुपभुञ्जानस्य **श्रीपार्श्वनाथस्वामिनो** गुरुगुरोर्गुर्वपि भाररहितम्, कुमुदिनीकान्तकान्तमपि गतकलङ्कपङ्कम्, पतङ्गवत् पाप-पङ्कशोषकमपि शीतलम्, तरङ्गिणीदयितवद् गभीरमपि क्षारितक्षारतम्, मुदिरप्रकरवत् तापापहारकमपि नाऽसितम्, संचञ्चूर्यमाणसद्गुणगणं चारुतरं चरितम्।

तत्र तत्र च प्रस्तावात् सदुपदेशपदं प्रापितानि सरसावबोधवि-धायकानि नैकानि कथानकानि, श्रोतॄणामुपश्रावितं च चिकित्सारहस्यम्, दर्शितानि च समुद्रमुनिशास्त्रशरीरशुभा-ऽशुभाभिज्ञानानि, समावेशितानि च सर्वाणि सुधास्यन्दीनि वर्णनानि, किमुच्यतेऽधिकम्?, समा-सादितमिदं चरितं महाकाव्यगणनागण्यताम्।

एतच्चरितमुद्रणादिसर्वव्ययदातारो वदान्यवरेण्याः **श्रीलश्रीलक्ष्मी-चन्द्रश्रेष्ठिनो** धन्यवादस्थानम्।

एतस्य श्रीपार्श्वनाथचरितस्य पुस्तकत्रयमाप्तमस्माभिस्तदर्थं ते पुस्तकदातारो धन्यवादपात्रम्, तत्र

पुस्तकद्वयं गुरूणां श्रीशास्त्रविशारदजैनाचार्यश्रीविजयधर्मसूरीणां शुद्धम्।
एकं च पंन्यासपदभूषितश्रीवीरविजयमुनिमहाशयानां शुद्धतरम्।

तस्मात् पुस्तकत्रयात् संशोधितमिदं सुचरितं श्रवणपथं प्रापय्य पवित्रो भवतु पुरुषगणः, स्वकर्मोत्करमुत्करितुं पारयतात् साधुजनः, तदनुमोदकः स्ताच्च प्रवरेतरनरगणः, उत्साहयेच्चास्माकमुद्यमं ग्राहकम-होदयः, संक्षालयेत्, प्रकटयेच्च यदत्र स्थलं सहज-कृत्रिमदोषपङ्क-पङ्किलमिति

ज्ञापयतः—

हरगोविन्द—बेचरदासौ।

# विषयानुक्रमः ।

अर्हम् ।

## परमोदारश्रेष्ठिवर्यलक्ष्मीचन्द्रस्य वंशवृक्षः, प्रशस्तिश्च ।

मनसुखदास
भार्या अमरुदे

*हंसराज
भार्या नवलादे
चन्द्रपाल
यादराम

धनसुखदास
भार्या नवलीबाई
छोगमल्लजी
भार्या चुन्नीबाई
लक्ष्मीचन्दजी
भार्या सुगुणबाई

अमरचन्द | मोहनलाल | फूलचन्द

श्रीचन्द

---

धन्वीव मार्गणगणाय वितीर्णलक्षः
कम्रो मरुष्वमरशाखिगुणान् दधद् यः ।
श्रीओसवाल इति नाम वरं दधानो
वंशोऽस्ति वंश इव मौक्तिकराशिशाली ॥ १ ॥
तत्राभूद् व्यवहारिमौलिसुमणिर्दासो मनःसौख्ययुक्
सद्योषाऽमरुदेयुतस्ततमतिः श्रीशीलकीलालसन् ।
येनाऽऽरोपि च पार्श्वमन्दिरशिरे † कुम्भः फलोधीपुरे

---

† अकारान्तोऽपि ।

श्रीनाभेयगृहं महेभ्यजगडूवत् साधुसंसेविते ॥ २ ॥
अभूतां तत्पुत्रौ सुखिधनसुखो हंसनृपतिः
प्रिया।युक्तावेतौ दिवसुखसखौ धर्मरसिकौ ।
तयोः पुर्याऽऽग्रायां *ख-युग-निधि-सोम सुशरदि
न्यधत्त श्रीपार्श्वं जिनमतरतो हंसमहिपः ॥ ३ ॥
तयोः पत्न्यौ क्रमेणाऽऽस्तां नवली-नवलाभिधे ।
धर्मकर्मप्रवीणे ते भर्तृभक्तिपरे वरे ॥ ४ ॥
*हंसेन हंसता तेन चैत्यं सीमन्धरप्रभोः ।
† लोका-ऽक्षि-रस-भूम्यब्दे उदधार्यर्गलं पुरे ॥ ५ ॥
¶ तत्सूनुश्चन्द्रपालाह्वो मुनिमानसहंसति ।
पुत्रो धनसुखस्याभूच्छोगमल्लो विभूतिमान् ॥ ६ ॥
अभूत् तस्योरुवंशस्य भार्या चुन्नीति संज्ञया ।
दयां दधाना दीनेषु संघभक्तिं वितन्वती ॥ ७ ॥
तत्पुत्रो वृद्धशाखायामुपकेशगणे गुणी ।
वैदगोत्रो लसच्छ्रीको लक्ष्मीचन्द्रो विराजते ॥ ८ ॥
केचिद् दानविधौ बलिप्रभृतयोऽभूवन् दकाराप्रियाः
केचित् क्षुद्रतयाऽभवंश्च कपिलादास्यादयो नप्रियाः ।
धर्माऽधर्मजकर्मणोर्विधिविधौ भूत्वाऽपि दा-नप्रियो
यः कीर्तिमतुलामलब्ध भुवि यत् तल्लक्ष्मिचन्द्रोऽद्भुतम् ॥९॥
पाताले मर्त्यलोके सुरपतिभवने सागरे भूधरेऽपि
यत्कीर्त्या व्याप्नुवत्या चिति-जडपटलं सर्वमेकीकृतं यत् ।
तस्माद् वेदान्तवादी भ्रमयुतमतिकोऽनाप्तवस्तुस्वरूपः
सर्वं चैकस्वरूपीनि निगदनपरः सत्य एवैत्र किन्न ? ॥१०॥
श्रीमानकब्बरधरापतिरेव जात-
श्च्युत्वाऽयमस्ति सदयो जिनवाक्यसेवी ।
प्राप्याऽऽगमद् विजयधर्ममुनीन्द्ररूपं

* विक्रमसंवत्सरे, १९४० । † विक्रमवर्षे, १९२७ ।

श्रीहीरसूरिरिति कोविदतर्कणैषा ॥ ११ ॥
धर्माख्यानात् तदाऽऽदानात् प्राग्जन्मस्मरणादिव ।
स एवाऽजनि संबन्धस्तयोर्मुनि-धनाढ्ययोः ॥ १२ ॥
जिनधर्मरतो मुनिभक्तियुतः
शुभशास्त्रगतिस्तपदत्तमतिः ।
उपदेशमवाप्य गुरोः सुमुखात्
त्वरितः प्रथितुं महमात्मनि यः ॥ १३ ॥
येन श्रीलक्ष्मिचन्द्रेण परदुःखापहारिणा ।
कारितं **पथिकस्थानमौषधी-पुस्तकालयम्** ॥ १४ ॥
सिद्धाचले च सत्क्षेत्रे तीर्थे सम्मेतभूधरे ।
स्वकीयं कर्म दग्धुं यो देवसद्मान्यकारयत् ॥ १५ ॥
सुदुस्तपं तपस्तप्त्वाऽऽराधयद् यो यथाविधि ।
एकादशीतिथिं पुण्यो भावशुद्धिसमन्वितः ॥ १६ ॥
तेनैव धर्मानुचरेण हर्षात् श्रीपार्श्ववृत्तं निजवित्तदानात् ।
उद्यापनार्थं तपसो निजस्य प्राकाशि धर्माख्यमुनीन्द्रवाक्यात् ॥ १७ ॥
तस्यास्ति वल्लभा नाम्ना **सुगुणा** सुगुणालयम् ।
दग्धं कामं पतिं ज्ञात्वाऽऽगमत् किं कामवल्लभा ? ॥ १८ ॥
त्रयः संसन्ति तत्पुत्रास्तेष्वाद्योऽमरचन्द्रकः ।
मध्यमो **मोहनो** धर्मी पश्चिमः **फुलचन्द्रकः** ॥ १९ ॥
एते सर्वे महापुण्या धर्मकर्मपरायणाः ।
मातृ-पितृमहाभक्तिभाजो भान्ति महाशयाः ॥ २० ॥
पौत्रोऽप्यस्यास्ति **श्रीचन्द्रो** मध्यपुत्राङ्गजः शुभः ।
नयनानन्दको योऽस्ति बालचन्द्र इवाङ्गिनाम् ॥ २१ ॥
कुटुम्बमेवमेतस्य जीवतान्नन्दतादपि ।
आकल्पं धर्मकर्माणि कुर्याद् धर्मप्रभावतः ॥ २२ ॥

॥ इति वंशप्रशस्तिः ॥

१ आत्मार्थम् ।

अर्हम्

श्रीविजयधर्मसूरिगुरुभ्यो नमः ।

श्रीभावदेवसूरिविरचितम्-

# श्रीपार्श्वनाथचरितम् ।



नाभेयाय नमस्तस्मै यस्य क्रमनखांशवः ।
मौलौ दधति नम्राणां मङ्गल्यामक्षतश्रियम् ॥ १ ॥
स्तुमः श्रीशान्तिनाथस्य क्रमच्छायाद्रुमद्वयम् ।
यस्मिन्नश्रान्तविश्रान्तैर्द्वन्द्वतापो न वेद्यते ॥ २ ॥
मनोदृशि यदंशांशुदिव्याञ्जननियोजनम् ।
कल्याणनिधिलाभाय सतां नेमिं तमाश्रये ॥ ३ ॥
भक्तिप्रह्वो द्विजिह्वोऽपि प्रापोच्चैःपदसम्पदः ।
यस्मिन्नस्मि नतो¹ भक्त्या तं श्रीपार्श्वजिनेश्वरम् ॥ ४ ॥
तं नमामि जिनं वीरं यदुत्था त्रिपदी नदी ।
क्षमाधरगुरुं प्राप्य विश्वं व्यापाऽस्तकल्मषा ॥ ५ ॥
समस्तेभ्यः शुभज्ञानवदान्येभ्यो² जगत्रये ।
त्रिकालविषयेभ्योऽपि जिनेन्द्रेभ्यो नमोऽस्तु मे ॥ ६ ॥
श्री-विद्यावास्तु हस्ताभ्यां वाग्देवी पद्म-पुस्तकम् ।
जीयाद् दधाना दौर्गत्यदुःखोच्छेदाय देहिनाम् ॥ ७ ॥
नमोऽस्तु गुरुचन्द्राय यत्करस्पृष्टमुर्द्धनि ।
आविर्भवति भव्येऽश्मन्य³पि वाक्यसुधारसः ॥ ८ ॥
जयन्त्यऽन्येऽपि ये सन्तो भवपङ्केऽपि पद्मवत् ।

---

१ कर्तरि क्तः । २ शुभज्ञानदानशीलेभ्यः । ३ चन्द्रपक्षे अश्मनि चन्द्रकान्ताऽश्मनि ।

न लिप्यन्ते सदात्मानं दधाना भुवनोत्तरम् ॥ ९ ॥
इत्थमेतानुज्ञाप्य भावोल्लासवशादहम् ।
मन्दधीरऽपि संक्षिप्तमतीनां हितकाम्यया ॥ १० ॥
अनन्तसुखसर्वस्वनिधानाख्यानबीजकम् ।
दुष्टमोहविषद्रोहाऽपोहगारुडमुत्तमम् ॥ ११ ॥
समस्तविपदुच्छेदसिद्धमन्त्रमयन्त्रितम् ।
इष्टसम्पत्तिवल्लीनां कन्दकन्दलनाऽम्बुदम् ॥ १२ ॥
संसारोदन्वदुत्तारयानपात्रमखण्डितम् ।
जरा-मरणविध्वंससुधाकुण्डं यथातथम् ॥ १३ ॥
सुहृदां हृदये दिव्यमुक्ताहारं महागुणम् ।
कर्णयुग्मे सकर्णानां सद्रत्नस्वर्णकुण्डलम् ॥ १४ ॥
मनोऽतिमत्तमातङ्गबन्धनाऽऽलानमश्लथम् ।
अज्ञाननिद्राविद्राणसुप्रभातमिदं नृणाम् ॥ १५ ॥
निबद्धमष्टभिः सर्गैः संबद्धं दशभिर्भवैः ।
चरितं कीर्त्तयिष्यामि श्रीमत्पार्श्वजिनप्रभोः ॥ १६ ॥

( कुलकम् )

अस्त्यत्र भरतक्षेत्रे पवित्रे पृथवीतले ।
नानाऽऽरामपुरग्रामसङ्काशाऽऽवासमण्डितम् ॥ १७ ॥
कृतपर्वतसंवाददिव्यप्रासादसुन्दरम् ।
विदेहविजयस्पर्धि विपणिश्रेणिराजितम् ॥ १८ ॥
अनेकाऽनेकपैरश्वैः नररत्नैरलंकृतम् ।
सद्द्वारवलयाऽऽकारप्राकारजगतीवृतम् ॥ १९ ॥
अपत्यमिव सश्रीकं जम्बुद्वीपस्य विश्रुतम् ।
नगरं विपुलाऽऽकारद्योतनं पोतनाभिधम् ॥ २० ॥

( कलापकम् )

---

१ उदन्वान् समुद्रः । २ अनेकपा हस्तिनः ।

तत्राऽऽसीत् कोशसंपन्नः पत्त्रा[1]ऽऽढ्यः स्वगुणोज्ज्वलः ।
यशःपरिमलस्फातिप्रीणिताऽशेषविष्टपः ॥ २१ ॥
प्रीताऽर्थिप्रस्तुतस्तोत्रभ्रमरस्वरबन्धुरः ।
संसेव्यो राजहंसानां समस्तसुमनोगुरुः ॥ २२ ॥
अरविन्दोपमः श्रीमान् अरविन्दो नरेश्वरः ।
किन्तु नित्यश्रिया ज्येष्ठस्तथा कण्टकवर्जितः ॥ २३ ॥
( त्रिभिर्विशेषकम् )

तस्य सद्गुणमाणिक्यमण्डना गजगामिनी ।
सुवर्णशालिनी न्यायधर्ममार्गप्रवर्त्तनी ॥ २४ ॥
परैरपरिभूतात्मा नाथाऽभ्युदयकारिणी ।
प्रियाऽस्ति धारणी नाम राज्यलक्ष्मीरिवाऽपरा ॥ २५ ॥
( युग्मम् )

कुलकादिक्रमेणैवमूर्ध्वोर्ध्वं स्तोकवृत्तवान् ।
आरम्भोऽयं प्रभोराद्यभवाऽऽधाराय मेरुवत् ॥ २६ ॥
राज्ये राज्ञोऽरविन्दस्य विधिना कृतशान्तिकः ।
कुलीनक्रमिकः स्पष्टभाषको विदुषां वरः ॥ २७ ॥
नृपधर्मसमाचारविचारचतुरः स्थिरः ।
ब्रह्मकर्मणि निष्णातो विश्वभूतिः पुरोहितः ॥ २८ ॥
निर्मलं मानसं यस्य त्यक्ताऽखिलजला[2]शयः ।
सर्वज्ञोपज्ञसद्धर्मराजहंसः समाश्रयत् ॥ २९ ॥
सधर्मचारणी तस्य नामतोऽभूदनुद्धरा ।
निजवंशे पताकेव या रराज गुणोज्ज्वला ॥ ३० ॥
कुलाचारधुराभारधरणोद्धुरकन्धरौ ।
कमठो मरुभूतिश्चाऽभूतां सुतवृषौ तयोः ॥ ३१ ॥
कमठस्य प्रिया जज्ञे वरुणा हरिणेक्षणा ।
मरुभूतेस्तु लावण्यवसुभूमिर्वसुन्धरा ॥ ३२ ॥

---

१ राजपक्षे पत्त्राणि वाहनानि, तैराढ्यः । २ अत्र ड-लयोरैक्यं समाश्रेयम् ।

शब्द-रूप-रस-स्पर्श-गन्धाख्यैः सुमनोहरैः ।
विषयैः पञ्चभिः कालं निन्युस्तेऽनन्यसन्निभाः ॥ ३३ ॥
अथ योग्यतया गेहभारमारोप्य पुत्रयोः ।
जिनधर्मसुधाऽऽस्वादछिन्नतृष्णार्तिसुस्थितः ॥ ३४ ॥
चटत्प्रकर्षवैराग्यरङ्गभरितमानसः ।
विविक्तस्य गुरोः पार्श्वे गृहीताऽनशनः सुधीः ॥ ३५ ॥
परमेष्ठिनमस्कारमन्त्रमेकमनाः स्मरन् ।
विश्वभूतिस्तनुं त्यक्त्वा सौधर्मेऽभूत् सुरोत्तमः ॥ ३६ ॥
( विशेषकम् )
पत्युर्वियोगविधुराऽनुद्धराऽपि ममाऽधुना ।
श्रेयो नाऽन्यदिहेत्युग्रं तपः कृत्वा व्यपद्यत ॥ ३७ ॥
परेतकार्यं कमठ-मरुभूती तयोरथ ।
कृत्वा कुटुम्बचिन्तायां जाताऽऽवाहितमानसौ ॥ ३८ ॥
अन्यदा बहिरुद्याने तत्र नेत्रामृतं सताम् ।
सच्छायः सुमनःशाली क्षमाऽऽधारो महोदयः ॥ ३९ ॥
प्रशमाऽमृतसिक्तात्मा सदाऽभीष्टफलप्रदः ।
हरिश्चन्द्रमुनिः कल्पशाखीव समवाऽसरत् ॥ ४० ॥
( युग्मम् )
तदीयगुणसौरभ्येणाऽऽकृष्टा भ्रमरा इव ।
आययुः परितः पौराः स्तुतिझङ्कारहारिणः ॥ ४१ ॥
पित्रोर्वियोगदुःखार्त्तौ विश्वभूतिसुतावपि ।
हृदि धर्मविनोदाय तदा तत्र समेयतुः ॥ ४२ ॥
प्रणिपत्य च तं शुद्धभावेन भवनिःस्पृहम् ।
धन्यंमन्यास्ततः सर्वे यथास्थानमुपाऽविशन् ॥ ४३ ॥
मुनिनाऽपि दयोल्लासिमानसक्षीरनीरधेः ।

१ प्रेत-पर्यायोऽयम् । २ क्षमा शान्तिः पृथिवी च ।

लोलकल्लोलसध्रीची प्रारेभे धर्मदेशना ॥ ४४ ॥
धर्मरत्नं भवपुरे चतुर्गतिचतुष्पथे ।
स्वर्णहट्टं नृजन्माऽऽप्य सद्द्रव्यैरेव लभ्यते ॥ ४५ ॥
तत्प्रायः सुलभं येन भवन्ति विपुलाः श्रियः ।
दुर्लभं तत्पुनर्भाग्यं येन धर्मे मतिर्भवेत् ॥ ४६ ॥
मालास्वप्नेक्षणमिदं सुप्तानां मोहनिद्रया ।
धर्मशून्यमधीतादि तत्रोत्स्वप्नायितं पुनः ॥ ४७ ॥
अघाटमपि कल्याणं[1] सुघटादपि कूटतः ।
यथा प्रशस्यते तद्वद् मुग्धोऽपि सुकृती नरः ॥ ४८ ॥
असाऽत्रनक्षरो लेखो निर्देवं देवमन्दिरम् ।
निर्जलं च सरो धर्मं विना यन्मानुषो भवः ॥ ४९ ॥
धनैश्वर्याऽभिमानेन प्रमादमदमोहिताः ।
दुर्लभं प्राप्य मानुष्यं हारयध्वं मुधैव मा ॥ ५० ॥
छिन्नमुलो यथा वृक्षो गतशिर्षो यथा भटः ।
धर्महीनो धनी तद्वत् कियत्कालं ललिष्यति[2] ॥ ५१ ॥
धराऽन्तःस्थं तरोर्मूलमुच्छ्रयेणाऽनुमीयते ।
अदृष्टोऽपि तथा प्राच्यधर्मो लक्षेत संपदा ॥ ५२ ॥
मूलभूतमतो धर्मं सिक्त्वा भोगफलं बुधाः ।
गृह्णन्ति बहुशो मूढास्तमुच्छिद्यैकदा पुनः ॥ ५३ ॥
आस्तां सिद्धिगतं सौख्यं मनोऽभीष्टं यदैहिकम् ।
जनास्तदपि धर्माख्यवृक्षस्य कुसुमोपमम् ॥ ५४ ॥
कुलं गतमलं कामाऽनुरूपं रूपमव्ययम् ।
विश्वभोग्यं च सौभाग्यं श्रीविलासो विकस्वरः ॥ ५५ ॥
अनवद्या पुनर्विद्या कीर्त्तिः स्फुर्तिमती सती ।
अभिरामो गुणग्रामः सर्वं धर्मादवाप्यते ॥ ५६ ॥
( युग्मम् )

---

१ कल्याणं कनकम् । २ 'लल विलासे' भौवादिकः ।

यद्यपि ज्वरितस्याऽग्निर्जन्तोर्जनयते जलम् ।
तथाऽप्युष्णीकृतं तस्य मुख्यपथ्यं तदेव हि ॥ ५७ ॥
तथा प्राक्कर्मदोषेण पीड्यमानस्य यद्यपि ।
धर्मो न रतये, कार्यो नीरसोऽपि तथाऽप्यसौ ॥ ५८ ॥
अतो धर्मं न मुञ्चन्ति कथञ्चन विचक्षणाः ।
विपद्यऽपि गता बाढम्, मुच्यते किमु संपदि ? ॥ ५९ ॥
पक्षपातोऽपि धर्मस्य जयाय ललिताङ्गवत् ।
तत्भृत्यसज्जनस्येव क्षयाय पुनरन्यथा ॥ ६० ॥
तथाहि जम्बूद्वीपेऽत्र क्षेत्रे भरतनामनि ।
अस्ति विस्तारगं श्रीभिः श्रीवासं नाम पत्तनम् ॥ ६१ ॥
आसीद् दासीकृताऽशेषभूपतिर्भूपतिः पुरा ।
तत्र चित्रगुणव्रातविख्यातो नरवाहनः ॥ ६२ ॥
तदीयदयिता देवी कमला कमलानना ।
कमलेव हरेः किं तु न चला न चलाकृतिः ॥ ६३ ॥
तस्या विश्वमनोनेत्राऽऽनन्दनो नन्दनोऽजनि ।
लालित्याऽतिशयाऽऽक्लृप्तललिताङ्गाभिधः सुधीः ॥६४॥
यथासमयमभ्यस्तशास्त्रशस्त्रकलापटुः ।
उवास हृदि बालोऽपि विदुषां विद्विषां च यः ॥६५॥
सत्पात्रविहिताऽऽधारः प्रचुरस्नेहपूरितः[1] ।
वृत्तोज्ज्वलगुणश्रीकः स्फुरत्तेजोमयात्मकः ॥६६॥
निजमुद्द्योतयामास प्रदीप इव यः कुलम् ।
परमुष्णस्वभावो न न च कश्मलदूषितः ॥६७॥
प्रीतिर्देवे गुरौ पित्रोर्भक्तिः स्वजनमाननम् ।
सत्यमार्त्तपरित्राणं वात्सल्यं चाऽऽश्रिते जने ॥६८॥
लघोरपि हि तस्यैवं स्वाभाविकगुणोदयः ।
अपक्वस्याऽपि कर्पूरस्योच्चैः परिमलो यथा ॥६९॥ (युग्मम्)

---
१ स्नेहस्तैलमपि ।

एवं भूरिगुणस्याऽपि तस्य दातृगुणो भृशम् ।
जज्ञे कुत्राऽपि कस्याऽपि बोभवीति मनोरतिः ॥७०॥
न तथाऽऽशु कथाकाव्यैर्न गीतवनितादिभिः ।
न चाऽश्वगजलीलाभिः सुखं [1]दृष्टे यथाऽर्थिनि ॥७१॥
गलितेव तिथिस्तस्य चित्ते मास इवाऽधिकः ।
तद्दिनं गणनां नैति यस्मिन्नाऽर्थिसमागमः ॥७२॥
सुतलाभादभीष्टस्याऽर्थ्याऽऽगमस्याऽपि शंसिने ।
दानव्यसनिनः तस्याऽदेयं किमपि नाऽभवत् ॥७३॥
अथाऽऽसीत् सज्जनो नाम्ना प्रकृत्या दुर्जनः पुनः ।
भृत्यः कृत्येषु सर्वत्र कुमारस्याऽनिवारितः ॥ ७४ ॥
वर्धितोऽपि कुमारेण तं प्रति प्रातिकूलकृत् ।
जलैः पुष्टोऽपि किं वार्द्धेः सुखाय वडवानलः ? ॥ ७५ ॥
सकलोऽपि सुवृत्तोऽपि दूष्यमाणोऽप्यलं जनैः ।
न मुञ्चति कुमारस्तं कलङ्कमिव चन्द्रमाः ॥ ७६ ॥
अनर्थहेतुः तत्सर्वं पूर्वदुष्कर्मचेष्टितम् ।
वैद्योऽपि यदपथ्याऽऽशी यद् विद्वान् नीचसंगतः ॥७७॥
आयुक्तः प्रीतिदो लोके वियुक्तः श्रवणप्रियः ।
प्रयुक्तः सर्वविद्वेषी केवलः स्त्रीषु वल्लभः ॥७८॥
इतः कश्चित् कलादेन[2] विहितो गुरुकारणे ।
ढौकितः भूपतेः सोऽग्रे पुना राज्ञा[3] ततः परम् ॥७९॥
अन्यदा तद्गुणप्रीतमानसोल्लासतो ददौ ।
अलङ्कारं कुमारस्य महामूल्यं महीपतिः ॥८०॥
दानमेवाऽस्तु किं भारकारिभिः भूषणान्तरैः ? ।
इतीव सपदि त्यागं चक्रे तस्याऽपि राजसूः ॥८१॥
अथ विज्ञपयामास तस्याऽतित्यागदूषणम् ।
तत्सर्वं सज्जनो गत्वा सविशेषं महीभुजे ॥८२॥

---

१ दृष्टैर्यथाऽर्थिभिः, इत्यपि । २ सुवर्णकारेण । ३ गृहीत इति शेषः ।

कर्णजपतया तस्य फुत्कृत्येव हुताशनः ।
अदीपिष्ट भृशं राजा, किं तु पुत्रोऽपि मित्रवत् ॥८३॥
द्रष्टव्यः शैशवोत्तारे नीतिवाक्यमिति स्मरन् ।
रहः कुमारमाकार्य शिक्षयामास कोमलम् ॥८४॥
( युग्मम् )
तात! यद्यपि सद्वृत्तैर्वृद्धत्वं जरसा विना ।
जातं तदपि ते किञ्चिद् योग्यत्वादुपदिश्यते ॥८५॥
वत्स! नो वेत्सि किं राज्यं बहुकार्यं निरन्तरम्? ।
स्वार्थैककरणव्यग्रपरिवारसमावृतम् ॥८६॥
सावधानतया चिन्त्यं करण्डस्थभुजङ्गवत् ।
नियन्त्रणीयं कपिवद् गुणैः शाखान्तरं व्रजत् ॥८७॥
फलितक्षेत्रवद् नित्यं रक्षणीयं प्रयत्नतः ।
नव्याऽऽराम इव स्थित्या सेवनीयं मुहुर्मुहुः ॥८८॥
समूलमपि कोशेन दृढस्कन्धं महीभुजा ।
तदपत्यैर्महाशाखं विस्तीर्णं नृचतुष्पदैः ॥ ८९ ॥
स्फुरद्रत्नसुवर्णादिपल्लवोल्लाससुन्दरम् ।
यशःकुसुमसंभारैराकृष्टाऽर्थिमधुव्रतम् ॥ ९० ॥
नानाऽऽयातकलादक्षपक्षिभिः कृतसंश्रयम् ।
सुधाधवलितोत्तुङ्गप्रासादेन महोच्छ्रयम् ॥९१॥
अनीतिजलकल्लोलैर्लोलमुच्चैः क्षणाद् भुवि ।
व्यसनाख्यो नदीपूरः पातयेद् राज्यपादपम् ॥९२॥
( कलापकम् )
किञ्चित् किञ्चिदकुर्वाणोऽप्यशृण्वन्नचलन्नपि ।
प्रमादश्छलयत्येवाऽनवधानं पिशाचवत् ॥ ९३ ॥
गम्यं तदस्य दूरेण पुरुषेण हितैषिणा ।
विश्वासो नैव कर्त्तव्यस्तथा लक्ष्म्यामियं यतः ॥ ९४ ॥

---

१ फुत्कारेण इव । २ जात!, एवमपि । ३ मधुव्रता भ्रमराः ।

क्षीरनीरनिधेर्जन्मलाभादिव सतृष्णताम् ।
करोति मत्तमातङ्गसंगादिव मदान्धताम् ॥ ९५ ॥
रजोबहुलतां पद्मसद्मवासादिवाऽधिकाम् ।
तनोति क्रूरतां तीक्ष्णाऽसिधाराचरणादिव ॥९६॥
( त्रिभिर्विशेषकम् )
नैव मूर्खे न विदुषि न शूरे न च कातरे ।
न कुरूपे न सद्रूपे न वृद्धे तरुणे न वा ॥९७॥
प्रकाश्य विविधान् भावानसतोऽपि सतो यथा ।
रञ्जयन्ती जगत्सर्वं नैव श्रीः काऽपि रज्यते ॥९८॥
पण्यं पण्याङ्गनेवाऽसौ केवलं पुण्यमीक्षते ।
नराणां तेन तैर्नित्यमर्जनीयं तदेव हि ॥९९॥
भवेद् नैकान्ततस्तच्च व्यसनाऽऽसक्तचेतसाम् ।
तदेवं भण्यते जात! भवानित्थं पुनः पुनः ॥ १०० ॥
एष यद्यपि ते दानगुणः सर्वगुणोत्तमः ।
तथाऽपि नियतं तत्राऽप्यत्याऽऽसक्तिर्न शोभना ॥१०१॥
सर्वथा सर्वकार्येषु माध्यस्थ्यं शस्यते नृणाम् ।
दन्तपातः कथं न स्यादतिकर्पूरभक्षणात्? ॥ १०२ ॥

तथा—

तरुदाहोऽतिशीतेन दुर्भिक्षमतिवर्षणात् ।
अतित्यागादनौचित्यमऽतिः कुत्राऽपि नेष्यते ॥१०३॥
एतदेव हि पाण्डित्यं यदाऽऽयादल्पको व्ययः ।
अत्रोदाहरणं दृष्टं स्पष्टं मुनिकमण्डलुः ॥१०४॥
नित्यं कृतव्ययः स्वैरं मेरुरप्यपचीयते ।
तेजसीव गते वित्ते नरोऽङ्गारसमो भवेत् ॥१०५॥
बन्धुर्बन्धुरधीस्तावत् तावद् भार्या मनोऽनुगा ।
सर्वः कलकलः तावद् यावद् द्रव्यसमागमः ॥१०६॥
तदभावे पुनः शान्तध्वनिं तमनुजीविनः ।

मुञ्चन्ति विहगाः सद्यस्तडागमिव निर्जलम् ॥१०७॥
विशुद्धोऽपि गुणव्रातो विना लक्ष्मीं न शोभते ।
उन्मीलति यथा चित्रं न विना कृष्णतूलिकाम्[1] ॥ १०८ ॥
मलरूपाऽपि तेनैषा सज्जनैरपि काङ्क्ष्यते ।
अतो नाऽर्थव्ययः कार्यस्त्वया वत्स ! यदृच्छया ॥१०९॥
अद्य श्वो वा तवैवाऽयं राज्यभारोऽवतिष्ठते ।
तन्निर्वाहक्षमं विद्वन् ! साधारणगुणं श्रय ॥११०॥
ललिताङ्गकुमारस्तदुपदेशाऽमृतं पितुः ।
कर्णाञ्जलिगतं पीत्वा मुदितो हृद्यऽचिन्तयत् ॥१११॥
धन्योऽहं यस्य मे तातः प्रत्यक्षमिति शंसति ।
गुरुवत् तत्त्वमेकान्ते तदिदं स्वर्णसौरभम् ॥११२॥
मातापित्रोर्गुरूणां च शिक्षणादपरं जने ।
अमृतं नास्ति, नास्त्येव तदुपेक्षासमं विषम् ॥११३॥
पूज्याऽऽदेशः प्रमाणं मे इत्यानन्द्य गुरुं गिरा ।
भक्त्या कृतनमस्कारः कुमारः स्वगृहं ययौ ॥११४॥
अथ स्तोकतमं तस्य यच्छतः पितुराज्ञया ।
अपवादः प्रवृत्ते याचकानां मुखादिति ॥११५॥
कुमार ! किमिदं विश्वदानेश्वरशिरोमणे ! ।
आकस्मिकमिहाऽऽरेभे त्रैलोम्याऽऽचरणं[2] त्वया ? ॥११६॥
चिन्तामणिसमो भूत्वा देव ! दानेन भूतले ।
पाषाण इव संवृत्तः तदिदानीं कथं भवान् ? ॥११७॥
कलामिन्दुः, करं दाता, धारां धाराधरो यदि ।
संकोचयिष्यते तर्हि जीविष्यति कथं जगत् ? ॥ ११८ ॥
व्यञ्जनं यद्वदन्नस्य यथा चाऽङ्गस्य भूषणम् ।
दानस्याऽन्ये गुणास्तद्वत् परीवाराय केवलम् ॥ ११९ ॥
दानमेकं ततः श्रेष्ठम्, महर्द्धिरपि मानवः ।

---

१ श्यामकूर्चिकाम् । २ विपरीतताचरणम् ।

तेन हीनो विना क्षीरं स्थूला गौरिव नाऽर्हति ॥ १२० ॥
धैर्य-शौर्यादिकं द्वीपि[1]-कोलादिष्वपि दृश्यते ।
दानं तु महतामेव गजेन्द्राणां प्रवर्तते ॥ १२१ ॥
कीटिकानामनक्षीणामपि संग्रहशीलता ।
दानं पुनर्न देवानामपि निर्निमिषेक्षिणाम् ॥ १२२ ॥
संग्रहैकपरः प्राप समुद्रोऽपि रसातलम् ।
दाता तु जलदः पश्य भुवनोपरि गर्जति ॥ १२३ ॥
धनाङ्गपरिवाराद्यं सर्वमेव विनश्यति ।
दानेन जनिता लोके कीर्त्तिरेकैव तिष्ठति ॥ १२४ ॥
अदातैव वरं जातमृतपुत्रादपुत्रवत् ।
दानेन जनयित्वाऽऽशां न तु तस्मात् च्युतः पुमान् ॥१२५॥
प्रहित्य सर्वतः कीर्त्तिं निमन्त्र्य भृशमर्थिनः ।
द्वारं पिदधतो देव ! कस्ते धातुविपर्ययः ? ॥ १२६ ॥
चित्रं दातृकरो मुक्तद्रविणोऽपि गुरुर्भवेत् ।
अर्थिनः पुनरत्यन्तलघुर्धनभृतोऽप्यसौ ॥ १२७ ॥
दातुर्नाऽर्थिसमो बन्धुर्भारमादाय यः परात् ।
लक्ष्मीरूपाऽऽपदि गतं निस्तारयति तं खलु ॥ १२८ ॥
तस्मिन् सदुत्सव इवाऽऽगते तुष्यति पण्डितः ।
मूर्खस्तु दूयते दीर्घरोगीव हि चिकित्सके ॥ १२९ ॥
समुद्राः स्थितिमुज्झन्ति चलन्ति कुलपर्वताः ।
प्रलयेऽपि न मुञ्चन्ति महान्तोऽङ्गीकृतं व्रतम् ॥ १३० ॥
पालयित्वा चिरं दानगुणं पावन[2]मुन्नतम् ।
मा नाशय निषेधेन शिखाबन्धेन दर्भवत् ॥ १३१ ॥
ललिताङ्गो निशम्यैवं हृदये पीडितो भृशम् ।
अचिन्तयादिदं हन्त ! विषमं समुपस्थितम् ॥ १३२ ॥
एकतः पितुराज्ञा मे परिवादस्तथाऽन्यतः ।

---

१ चित्रक-शूकरादिषु । २–मर्जितमित्यपि ।

सैष व्याघ्रतटिन्यायः किं करोमि द्वयाश्रयः ? ॥ १३३ ॥
उच्चैरारोहतां किं वा ममाऽऽज्ञाभङ्गदूषणम् ।
सर्वतः प्रसरन्नेषोऽवर्णवादस्तु दुस्तरः ॥ १३४ ॥
इति कृत्वा तथैवाऽसौ दातुं प्रवृत्ते पुनः ।
उष्णीकृतमपि स्वीयं शैत्यं याति यतः पयः ॥ १३५ ॥
तद् ज्ञात्वा कुपितः कामं कुमारस्य नराधिपः ।
द्वारं निवारयामास सेवाहेवाकिनोऽपि हि ॥ १३६ ॥
अथाऽसावपमानेन बाढमापूरितो हृदि ।
नदीपुर इवाऽऽवर्त्तवद्धरुद्धगतिर्गतः ॥ १३७ ॥
अहो ! मे व्यसनं नैव तावद् द्यूतादि किञ्चन ।
नैव राज्यस्पृहा नैवाऽविनयः कोऽपि नाऽनयः ॥ १३८ ॥
जन्तुप्रीतिकरं दानं यदेवं दोषतां गतम् ।
तदत्र युज्यते नैव मम स्थातुमतः परम् ॥ १३९ ॥
व्याधि-मालिन्य-दारिद्र्या-ऽपमान-व्यसनाऽऽगमः ।
परदेशं विना नाऽन्यदिह श्रेयो मनस्विनाम् ॥ १४० ॥
इति निश्चित्य निर्गूढं कुमारो निशि निर्जने ।
वरं तुरङ्गमारुह्य चचालैकां दिशं प्रति ॥ १४१ ॥
इङ्गितज्ञस्तु तद् ज्ञात्वा निजदौर्जन्यदोषतः ।
तत्र स्थातुमशक्तः सन् सज्जनोऽपि तमन्वगात् ॥ १४२ ॥
आत्मवत् कर्मणा तेनाऽनुगतः श्रितवत्सलः ।
कुमारः प्राह भो भृत्य ! वद किंचिद् विनोदकृत् ॥ १४३ ॥
तेनोचे देव ! किं श्रेष्ठं कथ्यतां पुण्य-पापयोः ? ।
सोऽप्यवादीदरे ! मूर्ख ! किमिदं गदितं त्वया ॥ १४४ ॥
अबला-बाल-गोपाल-हालिकानामपि स्फुटम् ।
इदं हि यद् जयो धर्मादधर्मेण पुनः क्षयः ॥ १४५ ॥
देव ! सत्यमहं मूर्खः परं कथय कीदृशौ ।
धर्माऽधर्मौ, कुमारेण भणितं शृणु सज्जन !? ॥ १४६ ॥

वचः सत्यं गुरौ भक्तिः शक्त्या दानं दयाऽर्दिते ।
धर्मोऽयमिष्टसंयोगकरोऽनिष्टनिवारकः ॥ १४७ ॥
अधर्मः पुनरेतस्माद् विपरीतोऽथ सोऽवदत् ।
नैवम्, समय एवाऽत्र कारणं संपदापदोः ॥ १४८ ॥
दिवा बलक्षये सूरोऽप्यस्तमेति गलद्द्युतिः ।
निशाबलवशात् क्षुद्रा अपि ताराः स्फुरन्त्यमूः ॥ १४९ ॥
समयस्य बले नृणामधर्मोऽपि सुखावहः ।
पुनस्तस्य बलाऽभावे न धर्मोऽपि सुखावहः ॥ १५० ॥
यदिदानीं तवाऽवस्था धर्मिणोऽपीदृशी ततः ।
अधर्मसमयोऽयं तद् धनं चौर्यादिनाऽर्जय ॥ १५१ ॥
कुमारोऽप्याह रे ! पापिन् ! न श्रोतव्यमिदं वचः ।
मा वादीः सर्वदा येन धर्मादेव जयो ध्रुवम् ॥ १५२ ॥
यस्तु कोऽप्यजयस्तत्राऽन्तरायं कर्म कारणम् ।
शर्करामश्नतां दन्तव्यथायै किं न कर्करः ? ॥ १५३ ॥
अन्यायेन तु या लक्ष्मीः स उद्द्योतः प्रदीपनात् ।
क्षणं प्रकाश्य वस्तूनि निर्वाहे केवलं रजः ॥ १५४ ॥
अरण्यरुदितैः किं वा पुरो ग्रामे जरन्नराः ? ।
जयं वक्ष्यन्ति चेद् धर्मात् तदा त्वं किं करिष्यसि ? ॥१५५॥
तेनोचे भृत्यभावं ते करिष्ये जीवितावधि ।
पणबन्धं कुमारोऽपि तमेव प्रतिपन्नवान् ॥ १५६ ॥
तावेवं कृतमर्यादौ वेगाद् ग्रामं गतौ ततः ।
परिषत्स्थानुपागत्य भृत्यः प्रणतिपूर्वकम् ॥ १५७ ॥
वृद्धान् प्रपच्छ यदहो ! संदेहश्चिरमावयोः ।
जयो धर्मादधर्माद् वा सम्यग् निर्णीय कथ्यताम् ? ॥१५८॥
( युग्मम् )

तैस्तु दैवादसंभाव्यनवीनप्रश्नविस्मितैः ।
रभसादिदमाचख्ये यदधर्माद् जयोऽधुना ॥ १५९ ॥

---

१ समाप्तौ ।

ततः पुनः पुरो यान्तं कुमारं सज्जनोऽवदत् ।
सोपहासं यथा देव! सत्यैकधनधार्मिक! ॥ १६० ॥
मुञ्चेमं तुरगं शीघ्रं भृत्यभावं कुरुष्व मे ।
तेनोचे वचनं मे स्यात् मलयेऽपि किमन्यथा ॥ १६१ ॥
गृहाण तुरगं भृत्य! पृष्ठचारी सदाऽस्मि ते ।
सर्वं यातु ममाऽसारं सारं सत्यं तु तिष्ठतु ॥ १६२ ॥
सोऽश्वारूढो व्रजन् वेगात् सहर्षमवलोकते ।
कुमारमनुधावन्तं श्रमस्वेदमलाविलम् ॥ १६३ ॥
अब्रवीच्च त्वया धर्मपक्षपातभवं फलम् ।
कुमार! ददृशे साक्षात् तदथाऽपि तदाग्रहम् ॥ १६४ ॥
मुञ्च वञ्चय भोः! लोकं वधबन्धादिके कृपाम् ।
मा कार्षीर्जीवनोपायः कोऽपि नान्यस्तवाऽधुना ॥ १६५ ॥
( युग्मम् )
कुमारोऽवोचदाः! पाप! वृथा ते सज्जनाभिधा ।
मधुराख्या विषस्येव त्वत्समो यन्न दुर्जनः ॥ १६६ ॥
किंचैवं दुर्मतिं यच्छन् व्याधादप्यधिकोऽभवः ।
अतिनिन्द्योऽहि पापस्य कारकादुपदेशकः ॥ १६७ ॥
यथा कोऽपि वने व्याध! कर्णान्ताऽकृष्टकार्मुकः ।
घाताग्रगतया मृग्या सदैन्यमिदमर्थितः ॥ १६८ ॥
प्रतीक्षस्व क्षणं व्याधः बाध्यमानानि मे क्षुधा ।
अवतिष्ठन्तेऽपत्यानि मदीयागमनाऽऽशया ॥ १६९ ॥
स्तन्यपानमहं तानि कारयित्वा तवाऽन्तिकम् ।
यावदायामि तेनोचे नैषि[1] चेत् तव किं ततः? ॥ १७० ॥
ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनाऽऽगमः ।
महान्ति पातकान्याहुस्तत्संसर्गश्च पञ्चमम् ॥ १७१ ॥
ब्रह्महत्यादिपञ्चाऽतिपातकाङ्गीकृतावपि ।

---

१ न एषि आगच्छसि ।

यदा न प्रत्ययस्तस्य तदाऽभाणि पुनस्तया ॥ १७२ ॥
कुधियं पृच्छतो दत्ते विश्वस्तस्य च दुर्मतिम् ।
तस्य पापेन गृह्येऽहं यदि नाऽऽयामि सत्वरम् ॥ १७३ ॥
तेन मुक्ता तथा कृत्वा पुनरागत्य तत्र सा ।
पप्रच्छ वद भो व्याध ! तव बाणप्रहारतः ॥ १७४ ॥
कथं छुट्ये ततस्तेन चिन्तितं हन्त ! सर्वथा ।
पशूनामपि निर्भर्त्स्यां कथं यच्छामि दुर्मतिम् ? ॥ १७५ ॥
कथितं चेति भद्रे ! मां दक्षिणे न प्रयासि[1] चेत् ।
तथैव वचसा तस्य सा जगाम जिजीव च ॥ १७६ ॥
तदेवं कथ्यते ते यन्मा पापमतिमातथाः[2] ।
येनाऽक्षत्रकृतां बाढं जीविताद् मरणं वरम् ॥ १७७ ॥
एकस्य निजजीवस्य कृते जीवाननेकशः ।
दुःखे क्षिपन्ति ये मूढाः तेषां किं जीवितं स्थिरम् ? ॥१७८॥
विपद्यपि गताः सन्तः पापकर्म न कुर्वते ।
हंसः कुर्कुटवत् कीटानत्ति किं क्षुधितोऽप्यलम् ? ॥ १७९ ॥
किञ्च क्षेत्रेषु जीवानामुप्त्वा बीजं वधादिकम् ।
समीहन्ते हहा ! मूर्खाः कथं सौख्योदयं ततः ? ॥ १८० ॥
निर्गुणस्य शरीरस्य प्रतिक्षणविनाशिनः ।
गुणोऽस्ति सुमहानेकः परोपकरणाभिधः ॥ १८१ ॥
तेऽप्यधन्याः पशुप्रायाः परार्थे य उदासते[3] ।
तेषां त्वजननिर्भूयाद् ये परद्रोहकारिणः ॥ १८२ ॥
यदि ग्राम्यैरजानद्भिर्धर्मो न बहुमानितः ।
किमेतेन सतामिष्टो न प्रमाणं भवेदसौ ? ॥ १८३ ॥
स्वादुस्वादाऽनभिज्ञश्चेद् द्राक्षासु करभो मुखम् ।

---

१ मां न प्रयासि न प्राप्नोषि, इत्यन्वितिः ।

२ 'तनूयी विस्तारे' अद्यतन्यामाङ्पूर्वकं थासि रूपम् । ३ उत्पूर्वकः 'आसिक् उपवेशने' ।

वक्रीकुर्यात्, ततस्तासां माधुर्यं क्वाऽपि किं गतम्? ॥१८४॥
एक एव सुहृद् धर्मस्तस्माच्च विमुखीभवन् ।
न भावी भाविभद्राणां कदाऽप्यभिमुखो भवान् ॥ १८५ ॥
सज्जनः प्राह भद्राणि दृश्यन्ते त्वयि कोविद! ।
इयता ते किमद्याऽपि न पूर्यन्ते मनोरथाः? ॥ १८६ ॥
यथा कोऽपि पुरा ग्राम्यो जनन्याऽभाणि यत्त्वया ।
गृहीतोऽर्थो न मोक्तव्यः कुलपुत्र! कथंचन ॥ १८७ ॥
अन्यदा वृषभं पुच्छे स जग्राह महाबलम् ।
तेनाऽसौ हन्यमानोऽथ कृष्यमाणो विसंस्थुलम् ॥ १८८ ॥
मुञ्च मुञ्चेति लोकेन मोच्यमानोऽपि नो जडः ।
पुच्छं मुमोच भोस्तद्वदेकग्राहो भवानपि ॥ १८९ ॥
पृच्छ्यते तर्हि भूयोऽपि कोऽपि किं तु पणस्तव? ।
इदानीं विद्यते नान्यश्चक्षुरुत्पाटनं विना ॥ १९० ॥
अमर्षाच्च कुमारेण तदप्यङ्गीकृतं वचः ।
ततः शाखापुरे गत्वा क्वाऽपि पप्रच्छिरे जनाः ॥ १९१ ॥
तैरपि प्रागिवाऽऽख्यातं भवितव्यनियोगतः ।
अथ तं प्रस्थितो मार्गे सज्जनः पुनरूचिवान् ॥ १९२ ॥
सत्यशौण्ड! कुमारेन्द्र! परोपकृतिकर्मठ! ।
धर्मकर्मनिधे! ब्रूहि किमिदानीं करिष्यसि? ॥ १९३ ॥
सोल्लुण्ठवचनैस्तस्य शाणघृष्टकृपाणवत् ।
भृशमुत्तेजितस्वान्तो गत्वाऽरण्ये वटादधः ॥ १९४ ॥
शृण्वन्तु वनदेव्यो मे लोकपालाश्च साक्षिणः ।
एक एव जयी धर्मः, एष ऊर्ध्वीकृतो भुजः ॥ १९५ ॥
न भयान्न तमोभावान्न च धर्मपराजयात् ।
केवलं वचनं स्वीयं कर्तुं सत्यं करोम्यदः ॥ १९६ ॥
इत्युदित्वा मुदोल्लासिरोमाञ्चैरञ्चितां तनुम् ।
तत्सत्त्वतुष्टदेवीभिः पुष्पकोशैरिवाऽर्चिताम् ॥ १९७ ॥

दधानः सहसा सूर्यस्याऽपि निर्मितविस्मयः ।
नेत्रे शस्त्रीकयोत्पाट्य सज्जनाय समर्पयत् ॥१९८॥ (कुलकम्)
सर्वश्रीनाशपुष्पस्य धर्मस्वीकारशाखिनः ।
फलं भुङ्क्ष्वेदमित्युक्त्वा हयारूढोऽन्यतो ययौ ॥ १९९ ॥
अथ तत्र कुमारोऽपि कृत्याऽन्तरसमापनात् ।
दुस्तराऽऽपन्नदीपूरकल्लोलोत्तालमानसः ॥ २०० ॥
दध्याविदमसंभाव्यसंभवाच्चेतसि क्षणम् ।
किमिदं हन्त ! धर्मैकनिरतस्य ममाऽभवत् ॥ २०१ ॥
तदीयवचनस्याऽपि प्रामाण्यं जाघटीति किम् ? ।
आः ! ज्ञातमथवा सिद्धिः कष्टेनाऽन्तरिताऽखिला ॥२०२॥
यथाऽङ्गक्षालकः पूर्वं मलाऽपनयनोद्यतः ।
तैलचूर्णादिकं देहे नियोजयति किञ्चन ॥ २०३ ॥
तथा धर्मोऽपि जीवस्य सिद्धिशुद्धिविधित्सया ।
प्राच्यकर्ममलोच्छित्त्यै करोति क्षणमापदम् ॥ २०४ ॥
धिग् धिग् मे मोहहतकादिदं वैलोम्यचिन्तनम् ।
धर्म एव ध्रुवं नाऽन्यो जयहेतुर्जगत्त्रये ॥ २०५ ॥
तदेकशरणः स्वान्तमित्याऽऽनिन्ये पुनः पथि ।
दैवायत्ते हि देहे तु सतामास्था न विद्यते ॥ २०६ ॥
दुःखे पतन्तं मुग्धत्वाद् मनः कायमनुव्रजत् ।
अन्योऽयमिति संबोध्य धीरः स्थिरयते[१] निजम् ॥ २०७ ॥
तदा तस्य महादुःखं सतोऽप्युच्छेत्तुमक्षमः ।
अद्रष्टुमिव सूर्योऽस्तपर्वताऽन्तरितोऽभवत् ॥ २०८ ॥
शब्दायमाना विविधं पक्षिणोऽपि तदाऽऽपदि ।
क्रन्दन्त इव दुःखेन निलीना नीडवेश्मसु ॥ २०९ ॥
मुखानि ककुभां सद्यस्तमसा श्यामतामगुः ।
कुमाराऽऽपत्तिसंजातशोकेनेव प्रसर्पता ॥ २१० ॥

१ स्थिरं करोतीत्यर्थः ।

अहो ! कथमऽसौ भावी महान्मेऽत्र चिन्तया ?।
क्षणमेकमजागेतां रोदसी अपि निःस्वने ॥ २११ ॥
अत्राऽन्तरे वटे तत्रैकत्र संमिलितास्तदा ।
भारण्डपक्षिणः स्वैरं संलापमिति चक्रिरे ॥ २१२ ॥
कथ्यतां येन यद् दृष्टं श्रुतं वा काऽपि कौतुकम् ।
एकेन व्याहृतं तेषु कथयामि निशम्यताम् ॥ २१३ ॥
इतोऽस्ति ककुभि प्राच्यां चम्पा नाम महापुरी ।
तस्यां भुवनविख्यातो जितशत्रुर्महीपतिः ॥ २१४ ॥
पुत्री पुष्पावती तस्य जीवितव्यादऽपि प्रिया ।
सकलस्याऽपि राज्यस्य रहस्यमिव मूर्तिमत् ॥ २१५ ॥
यस्याः क्रमयुगं धत्ते दायादत्वं सरोरुहाम् ।
ऊरुयुग्मं पुना रम्भास्तम्भगर्भं जिगीषति ॥ २१६ ॥
मध्यदेशः कृशोदर्यास्तुच्छः कृपणचित्तवत् ।
सविस्तारमुरस्त्वेष्यद्गुणग्रामादिवाऽधिकम् ॥ २१७ ॥
बाहू सह मृणालैः सस्पर्द्धौ मृदुतरावपि ।
अधरोऽपि हरत्येव प्रसभं विद्रुमश्रियम् ॥ २१८ ॥
उदारचित्तवद् नासावंशोऽतिसरलोन्नतः ।
कर्णपाली चलद्दोलालीलां धत्ते मनोभुवः ॥ २१९ ॥
केशपाशो बर्हिबर्हलक्ष्मीलाभादिवोज्ज्वलः ।
तद्रूपमथ किं वर्ण्यं निर्वर्ण्यं द्युसदामपि ॥ २२० ॥
किं तु सर्वं वृथा जज्ञे दैवाच्चक्षुरभावतः ।
लक्षाङ्कोऽप्यऽप्रमाणं स्याद् यथा पाश्चात्यबिन्दुना ॥२२१॥
अन्यदा तां सभाऽऽसीनः कन्यामङ्कगतां तथा ।
निरूप्य सहसा चिन्ताऽऽचान्तस्वान्तोऽभवद् नृपः ॥२२२॥
अहो ! पश्य हताशस्य प्रतीपाऽऽचरितं विधेः ।
एवं निर्माय यदियं कथं हन्त ! विडम्बिता ? ॥ २२३ ॥
इह तावन्निसर्गेण चिन्तायै पुत्रिका पितुः ।

विशेषेण पुनर्दोषदूषिता तत् करोमि किम् ? ॥२२४॥
अथवाऽलमुपालम्भैर्दत्तैर्दैवस्य संप्रति ।
इयं प्राप्तवरा तेन कोऽप्युपायो विधीयते ॥ २२५ ॥
इति निश्चित्य भूपालः कारयामास घोषणाम् ।
सर्वत्र पटहध्वानपूर्वकं यदहो ! जनाः ! ॥ २२६ ॥
जितशत्रोः पुत्रिकाया लोचने यः करिष्यति ।
तस्मै राजा निजं राज्यस्याऽर्धं कन्यां च दास्यति ॥२२७॥
भ्रमन्तः सन्ति ते नित्यमित्यादेशकरा नराः ।
अतः परमहं तत्र न जाने किं भविष्यति ? ॥२२८॥
तच्छ्रुत्वा विस्मयादेकः पप्रच्छ लघुपक्षकः ।
तात ! कश्चिदुपायोऽपि भवेत् तन्नेत्रसंभवे ॥ २२९ ॥
जात्यऽन्धायाः कथं नेत्रे भवतो वत्स ! किन्त्विह ? ।
मणिमन्त्रमहौषध्यः सन्त्येवाऽचिन्त्यशक्तयः ॥ २३० ॥
कथ्यतां तर्हि तेनोक्तः स ऊचे नैव कथ्यते ।
तरोरपि यतो जातु रजन्यां भवतः श्रुती[1] ॥ २३१ ॥
निर्बन्धेन[2] तथा तेन शिशुभावादपृच्छयत ।
दिव्यज्ञानी यथा सत्यं भारण्ड इदमाख्यत ॥२३२॥
वल्ली याऽस्य तरोः स्कन्धे देशमावेष्ट्य तिष्ठति ।
तदीयरससंसेकात् सद्यो नव्यदृशोर्भवैः[3] ॥ २३३ ॥
तात ! प्रातः क्व गन्तासि तत्रैव पुरि पुत्रक ? ।
नयेः सहैव मां तर्हि येन मेऽस्त्यातिकौतुकम् ॥ २३४ ॥
इत्थं संलपतां तेषां प्रमीला[4] क्षणमागमत् ।
कुमारोऽपि वटाऽधस्थः सर्वं श्रुत्वेत्यचिन्तयत् ॥ २३५ ॥
किन्तु सत्यमिदं किंवाऽसत्यमेवाऽत्र को भ्रमः ? ।
धर्म एव सतां नित्यं जागर्त्ति विपदुच्छिदे[5] ॥ २३६ ॥
करस्पर्शाल्लतां ज्ञात्वा छित्त्वा क्षुरिकया च सः ।

१ श्रवणद्वयम् । २ आग्रहेण । ३ उत्पत्तिः । ४ निद्रा । ५ चतुर्थ्यन्तमेतत् ।

आतङ्कखण्डस्य रसेनाऽक्षिकूपाऽवपूरयन् ॥ २३७ ॥
अथ सद्यो नवोद्भिन्नदिव्यनेत्रो महामनाः ।
सर्वं निरूपयामास वस्तु रात्रावपि स्फुटम् ॥२३८॥
इदं पुष्पावती-राज्यलाभाय मम दैव ! किम् ।
सर्वम्, तदमुना सार्धं यामीत्याकलय्य तं वटम् ? ॥२३९॥
निलीय पक्षिपक्षान्तस्तस्थावथ निशात्यये ।
उड्डीय तद्युतः पक्षी चम्पोद्यानवनं ययौ ॥२४०॥

( युग्मम् )

ततः कुमारो निर्गत्य स्नात्वा सरसि निर्मले ।
कृतस्वादुफलाऽऽहारश्चलितो नगरीं प्रति ॥२४१॥
पटहोद्घोषणं शृण्वन् प्रतोलिद्वारमागतः ।
तस्योपरिष्टाल्लिखितं श्लोकमेवमलोकयत् ॥२४२॥
जितशत्रोरियं वाचा मत्पुत्रीनेत्रदायिने ।
राज्यस्याऽर्धं च कन्यां च प्रदास्यामीति नान्यथा ॥२४३॥
वाचयित्वा च तं रात्रीश्रुतसंवाददर्शनात् ।
शुभसंभावनोत्कर्षादतीव मुमुदे हृदि ॥२४४॥
इङ्गितज्ञैश्च तद् ज्ञात्वा नियुक्तै राजपूरुषैः ।
नृपाय तदनुज्ञातैरिति सर्वं निवेदितम् ॥२४५॥
दिष्ट्या वर्द्धाप्यसे देव ! जयेन विजयेन च ।
प्राप्तो द्वारे पुमानेकस्त्वन्मनोरथपूरकः ॥२४६॥
श्रुत्वा तत्कर्णपीयूषं सहर्षोच्छ्वसिताऽऽत्मनि ।
अमादिव तनौ तेषां सर्वाङ्गाभरणं ददौ ॥ २४७ ॥
उत्कण्ठितश्च तं द्रष्टुं सहस्राक्षममन्यत ।
बाहुं सहस्रबाहुं च तस्याऽऽश्लेषाय भूपतिः ॥ २४८ ॥
शीघ्रमाकार्य दृष्ट्वा च तं गुणाऽधिकरूपिणम् ।
यत्राऽऽकृतिर्गुणास्तत्र निश्चिकायेति भाषितम् ॥ २४९ ॥

१-मेकमलोकत, इत्यपि । २ शत्रन्तस्य मा-धातोर्नञ्पूर्वकं प्रथमान्तमेतत् ।

गाढमालिङ्ग्य दूर्वाभरोमाञ्चैरर्चयन्निव ।
अङ्कमारोप्य हर्षाश्रुसलिलैः स्नपयन्निव ॥ २५० ॥
प्रीणयन्नमृताऽऽस्वादसोदरैस्तं गिरां रसैः
कुमारमिदमप्राक्षीत् सस्नेहमधुरं नृपः ॥ २५१ ॥
किं कुलं वत्स ! का जातिः को देशो निजजन्मना ।
भवता पावनीचक्रे ब्रूहि यन्मेऽतिकौतुकम् ?॥ २५२ ॥
व्याजहार कुमारोऽपि देव ! किं संभ्रमोदितैः ?।
कृत्यमादिश्यतां शीघ्रं तदेवोत्तरमत्र मे ॥ २५३ ॥
अहो ! कृत्यैकनिष्ठत्वमस्य नो फल्गु वल्गितम् ।
तदेतेनाऽनुमीयेत कुलाद्यं सर्वमुत्तमम् ॥ २५४ ॥
विमृश्येति नृपस्तेन समं कन्यागृहं ययौ ।
श्रुत्वा कृत्यं कुमारोऽपि कन्यान्तिकमुपेयिवान् ॥ २५५ ॥
चित्रग्राह्यो जनोऽयं तच्चारुपट्टासने स्थितः ।
सुगन्धद्रव्यमानाय्य विधाय विधिमण्डलम् ॥ २५६ ॥
पूजयित्वा च पुष्पाद्यैर्जपित्वा किञ्चन क्षणम् ।
ध्यानमापूरयामास विस्मापितनरेश्वरम् ॥ २५७ ॥
कटीन्यस्तं लताखण्डं गृहीत्वा तद्रसेन च ।
अपूरयद् दृशौ तस्याः स्पष्टे जाते च तत्क्षणात् ॥ २५८ ॥
रूपलावण्यसौन्दर्यनिर्जिताऽनङ्गविग्रहम् ।
भाग्यसौभाग्यनिकषं तं वीक्ष्य पुरुषं पुरः ॥ २५९ ॥
हर्षौ-त्सुक्य-त्रपा-जाड्यप्रमुखं भावसंकरम् ।
दधाना कामनामेनां सा चकार नृपात्मजे ॥ २६० ॥
( युग्मम् )

इयत्कालं दृशोरान्ध्यमजनिष्ट यथा मम ।
आजन्माऽपि तथा भूयात् त्वदन्यपुरुषेक्षणे ॥ २६१ ॥
तन्निशम्य जगादैवं नृपः पूर्णमनोरथः ।
अनेन स्वगुणैरेव त्वमात्ता कनकोत्तमे ! ॥ २६२ ॥

त्वयाऽपि स्वयमेवाऽस्मै स्फुरमात्मा समर्पितः ।
नाऽहं निमित्तमात्रोऽपि चिरं जीव सभर्तृका ॥ २६३ ॥
ततो मौहूर्त्तिकश्रेष्ठं सपद्याऽऽजूहवद् नृपः ।
गणयित्वाऽऽख्यद् सोऽप्याऽऽसन्नं वैवाहिकं क्षणम् ।२६४॥
चित्तवित्ताऽनुमानेन सर्वमंत्राहपूर्वकम् ।
तयोरकारयद् राजा पाणिग्रहणमहोत्सवम् ॥ २६५ ॥
ददाऽथ कुमाराय महासौधं मनोहरम् ।
देशकोशादिसप्ताङ्गराज्यसार्द्धं विभज्य च ॥ २६६ ॥
पुष्पावत्या समं सोऽपि तत्र काव्यकथारसैः ।
धर्मशास्त्रविनोदैश्च दोगुन्दक इवाऽपरः ॥ २६७ ॥
पुण्यप्रभावाऽऽविर्भूतिप्रभूतः सुखसम्पदा ।
सुधामग्न इवाऽजस्रं वासरान्निरवाहयत् ॥२६८॥ ( युग्मम् )
कुमारस्तावदन्येद्युः वातायनगतः पुरम् ।
आलोकयन्नकस्मात् तं भृत्याऽधममवैक्षत ॥ २६९ ॥
गलन्नेत्राऽऽस्यबीभत्सं श्रस्तव्यस्तशिरोरुहम् ।
दुर्निवारक्षुधाबाधाकरालवदनोदरम् ॥ २७० ॥
सर्पाकारसिराजालैः कङ्कालमिव भीषणम् ।
पापाऽतिरेकाद् उद्वृत्तं नरकादिव नारकम् ॥ २७१ ॥
विशीर्णदण्डिखण्डैकपरिधानं दुरीक्षणम् ।
मलीमसतनुं मूर्त्तं पाप्मानमिव जङ्गमम् ॥ २७२ ॥
व्रणपट्टैर्दरिद्रेषु बद्धपदमिवाऽऽपदा ।
घृणाजनकमत्यन्तकठोरमनसामपि ॥ २७३ ॥
अलाभेन च भिक्षायाः पर्यटन्तं गृहे गृहे ।
कराऽऽत्तकर्परं दीनं प्रस्खलन्तं पदे पदे ॥ २७४ ॥
( षड्भिः कुलकम् )

---

१ नाडिकाः । २ अस्थिपञ्जरः ।
३ "विरलेऽल्पे कृशे दण्डी" इति हैमोऽनेकार्थसंग्रहः ।

उपलक्ष्य पुनः सम्यक् करुणार्द्रमना भृशम् ।
अहहाऽस्य वराकस्य दशैषाऽजनि कीदृशी ॥ २७५ ॥
अहमित्थमयं चैवं धिग् दैवमिति चिन्तयन् ।
तमाकार्य पुनश्चेटैः कुमार इदमभ्यधात् ॥ २७६ ॥
अहो ! जानासि मां ब्रूहि सोऽपि कम्पितविग्रहः ।
भयेन तरलं नेत्रयुगं कुर्वन्नवोचत ॥ २७७ ॥
देव ! पूर्वाऽचलोत्तुङ्गशृङ्गसङ्गतमण्डलम् ।
को न वेत्ति रविं को वा गगने घनमुन्नतम् ? ॥ २७८ ॥
अलं संभ्रमवाक्येन सत्यमाख्याहि तेन सः ।
इत्युक्तः पुनरप्याह तर्हि देव ! न वेद्म्यऽहम् ॥ २७९ ॥
ललिताङ्गोऽब्रवीद् यस्य चक्षुरुत्पाटनेन भोः ! ।
उपचक्रे त्वया तं मां कथं नो वेत्सि सज्जनः ? ॥ २८० ॥
तत् श्रुत्वा सहसाऽऽशङ्कालज्जाभाराऽतिरेकतः ।
विविक्षुरिव पातालमधोमुखमसौ स्थितः ॥ २८१ ॥
अथ त्याजितदुर्वेषं कारितस्नानभोजनम् ।
परिधापितसद्वस्त्रं कुमारस्तमभाषत ॥ २८२ ॥
प्रभूतेनाऽपि किं तेनोपार्जितेन धनेन भोः ! ।
येनाऽऽत्मीयमनुष्याणां संविभागो न विद्यते ? ॥ २८३ ॥
अद्य मे सफलं राज्यं यत्र दुःखसखो भवान् ।
समाजगाम तत्सौख्यं भुङ्क्ष्व निश्चिन्तमानसः ॥ २८४ ॥
सविस्मयमनाः सोऽपि दध्याविति हृदि क्षणम् ।
अहो ! काऽरण्यजाऽवस्था क्व चासाऽवस्य दृश्यते ? ॥२८५॥
चित्तेऽपि यदसम्भाव्यं दैवात् तदपि जायते ।
अस्तु वा किं वितर्केण भणामि समयोचितम् ? ॥ २८६ ॥
सतोऽपि लयतां[1] दोषानऽसतोऽपि परे गुणान् ।
वदतां विगतोपाधिः काऽप्यऽपूर्वा स्थितिः सताम् ॥२८७॥

---

१ षष्ठीबहुवचनम् , आच्छादयतामित्यर्थः ।

व्यसञ्जयन्त्यऽयमन्येषां ग्वत्वा गच्छन्नवञ्चन ।
अधः क्षिपन्ति सन्तस्तु महाह्रदवदम्भसाम् ॥ २८८ ॥
श्रूयतां च तदा देव! तादृशं त्वां वटादधः ।
विमुच्य विततं भाग्यमिव मार्गे चलन्नरम् ॥ २८९ ॥
गृहीतं तस्करैः सर्वं दृढमाहत्य यष्टिभिः ।
दुष्कर्मफलभोगाय जीवन् मुक्तश्च तैरहम् ॥ २९० ॥
नाथ! साक्षाद् मया दृष्टं स्वस्येदं पाप्मनः फलम् ।
त्वयाऽपि सुकृतस्यैकधर्मादेव ध्रुवं जयः ॥ २९१ ॥
तदद्दश्यमुखं पापं मां दूरेण विसर्जय ।
ईदृक्सम्भावनायोग्यो नाऽहमस्मि विचारय ॥ २९२ ॥
कुमारः प्राह भो मैवं विकल्पं हृदये कृथाः ।
साहाय्येन तवैवेदं मम सर्वं विजृम्भते ॥ २९३ ॥
कथमत्रागमो राज्य-कन्यालाभावमन्यथा? ।
मम सत्त्वसुवर्णस्य परीक्षणकषोपल! ॥ २९४ ॥
तदस्मिन्नधुना राज्ये मदीयेऽखिलकृत्यकृत् ।
प्रधानपदवीमेत्य गतचिन्तं विधेहि माम् ॥ २९५ ॥
निवृत्तेऽथ तथा राज्ञः पुत्र्या प्रकृतिदक्षया ।
विदित्वा तस्य दौरात्म्यमभाणीति नृपात्मजः ॥ २९६ ॥
नोपदेशः कुलस्त्रीणां पुरुषं प्रति बुध्यते ।
किन्तु देव! त्वदीयोऽतिप्रसादो मे तदुच्यते ॥ २९७ ॥
प्राणेश! यदि ते स्नेहात् प्रतिपन्नतयाऽथवा ।
आर्त्तत्राणस्वभावाद् वा सज्जनो हृदि सम्मतः ॥ २९८ ॥
तदस्य दीयतां देशो द्रव्यं वा किञ्चिदद्भुतम् ।
अनेन सह किन्त्वेवं सङ्गतिर्नैव युज्यते ॥ २९९ ॥
लालितः सत्कृतस्वादुभोजितोऽथ चिरादपि ।
अकृत्वा सर्पवद् नीचो विकारं नाऽवतिष्ठते ॥ ३०० ॥

१ अम्भसामधम्, इति योजना । २ पूर्वं ज्ञाततया ।

तेजोमयोऽपि पूज्योऽपि घातिना नीचधातुना ।
लोहेन सङ्गतो वह्निः सहते घनताडनम् ॥ ३०१ ॥
वदने समतां बिभ्रत् पश्चाच्च विषमुल्वणम् ।
दूरं वृश्चिकवत् त्याज्यः क्षुद्रात्मा दुर्जनो जनः ॥ ३०२ ॥
स्तोकमप्युद्गमं प्राप्य न्यग्रोधाङ्कुरवत् खलः ।
प्रसरन् पाटयन् सन्धिं प्रासादं पातयेद् नृपम् ॥ ३०३ ॥
स्नेहे नाशं गुणे[1] दाहं वितनोत्यमले मलम्[2] ।
दीपज्वालोपमा देव ! खले मैत्री नृणां खलु ॥ ३०४ ॥
श्रूयते नीतिशास्त्रेषु हृद्योच्चारोपकारिणः ।
हंसस्य यद्भूद् नीचकाकसंसर्गदोषतः ॥ ३०५ ॥
यथा कोऽपि सरस्याऽऽति[3]स्पर्धया मूर्खवायसः ।
पतितोऽन्तर्जलं मीनजिघृक्षुर्व्योममण्डलात् ॥ ३०६ ॥
स तरीतुमजानानः सलिलप्लुतपक्षतिः[4] ।
सेवालैर्वेष्टितोऽत्यन्तं जातो मृत्युभयाऽऽकुलः ॥ ३०७ ॥
तं दृष्ट्वा कृपया हंसी तीरगा हंसमब्रवीत् ।
प्रिय ! पश्य कथं काको वराको म्रियते पुरः ? ॥ ३०८ ॥
विश्वपक्षिगणेषु त्वमुत्तमो गीयसे जनैः ।
तदस्य दीयतां जीवदानमुत्तार्य नीरतः ॥ ३०९ ॥
साधु साध्विति भाषित्वा हंसो हंसी च वायसम् ।
चञ्च्वाऽऽदाय तृणं तत्र विलग्नं निन्यतुर्बहिः ॥ ३१० ॥
क्षणादाऽऽश्वास्य काकोऽथ वातेनोद्दानपक्षतिः ।
विलग्य पादयोर्बाढमिति हंसं न्यमन्त्रयत् ॥ ३११ ॥
कोऽपि प्रत्युपकारस्ते नैव निष्पद्यते मया ।
तथाऽपि कुरु मे तोषं समागम्याऽद्य मद्वनम् ॥ ३१२ ॥
हंसेनाऽपि तदाऽऽकर्ण्य प्रियाया वीक्षितं मुखम् ।

---

१ दवरके अपि । २ कज्जलमपि ।

३ पक्षिविशेषः । ४ पक्षमूलम् ।

साऽपि ज्ञाततदाकूता भ्रच्छन्नमिदमब्रवीत् ॥३१३॥
सर्वस्योपकृतिर्दैव निर्विचारं विधीयते ।
स्तोकाऽपि न पुनः कर्तुं युज्यते नीचसंगतिः ॥३१४॥
कान्तया वारितोऽप्येवमऽतिदाक्षिण्यतोऽथ सः ।
क्षणं यामीति तामुक्त्वा सहाऽनेन गतो वनम् ॥३१५॥
तत्र निम्बस्य शाखायामुपविष्टावुभावपि ।
वाह्यालिक्रीडया श्रान्तस्तदाऽधश्चाऽऽगतो नृपः ॥३१६॥
उड्डीनो वायसो विष्टां कृत्वाऽथ नृपमस्तके ।
दृष्ट्वा हंसो नरैकेन धनुर्गुलिकया हतः ॥३१७॥
पतितं भुवि तं वीक्ष्याऽवदद् नृपपरिच्छदः ।
अहो ! चित्रं यदीक्ष्येत हंसरूपेण वायसः ॥३१८॥
हंसः कण्ठगताऽऽत्माऽपि जनालापं निशम्य तम् ।
स्वजातिदूषणोद्धारहेतवे नृपमब्रवीत् ॥३१९॥
यतः-
नाऽहं काको महाराज ! हंसोऽहं विमले जले ।
नीचसंगप्रसङ्गेन मृत्युरेव न संशयः ॥३२०॥
इत्यादि गदितं तस्य श्रुत्वा सदयमानसः ।
नृपस्तद्दिनमारभ्य निवृत्तो नीचसंगतः ॥३२१॥
कुर्वतो हि तमप्येवमहिताय खलो भवेत् ।
अतः प्रिय ! तदाऽऽसंगो वार्यते ते पुनः पुनः ॥३२२॥
सज्जनेनाऽपि किं तेन यः शङ्खसमलक्षणः ।
धवलो बहिरत्यन्तमन्तस्तु कुटिलस्थितिः ॥३२३॥
स्त्रीणामपि वचः कालेऽनुकूलं मन्यते बुधैः ।
दुर्गा वामरवा किं न शस्यते मार्गगामिभिः ॥३२४॥
इदं हृदि कुमारस्य चमच्चक्रे तयोदितम् ।

१ विदितहंसाऽभिप्राया । २ तृतीयान्तम् । ३ पक्षिविशेषः, यो वामं शब्दायमानः सुशकुनचिह्नम् ।

परमार्थस्वभावस्य कर्त्तव्यमिति न स्थितम् ॥३२५॥
महतामप्यहो ! दैवाद् दुर्वारा नीचसंगतिः ।
कर्पूरस्य कथं न स्यादङ्गारेण समं रतिः ? ॥३२६॥
स्वस्वास्थित्या ततः काले कियत्यपि गतेऽन्यदा ।
पप्रच्छ वसुधाऽधीशः प्रच्छन्नमिति सज्जनम् ॥३२७॥
कः संबन्धः कुमारस्य त्वययेवं यत् तदादरः ? ।
कुद्रव्यजीवदोषेण सोऽपि चिन्तितवानिदम् ॥३२८॥
स्मृत्वा पूर्वविकारं मे कुमारोऽनर्थहेतवे ।
क्काऽपि भावी, विपद्येनं तदादावेव पातये ॥३२९॥
पापः स्वपोषकस्याऽपि संपदा हृदि खिद्यते ।
हरितार्द्रां श्रुतं पृष्ठे यथा दृष्ट्वा खरश्चरन् ॥३३०॥
जगाद च त्वया देव ! भूयः कथितसुन्दरम् ।
न पृष्ठव्यमिदं राजा सुतरामादृतस्ततः ॥३३१॥
ददौ शपथमूचेऽसाऽवहो ! संकटमागतम् ।
निषेधाज्ञा कुमारस्य कथनाज्ञा महीपतेः ॥३३२॥
कुमारस्याऽपि पूज्यस्य दुर्लङ्घ्याऽऽज्ञाऽथवा तव ।
तेनैष कथयन्नस्मि शृणु देव ! यथातथम् ॥३३३॥
श्रीवासनगराधीशनरवाहननन्दनः ।
अहं देव ! महीयस्यकौरिकस्य सुतस्त्वयम् ॥३३४॥
प्रकृत्या रूपवानाऽऽप्तविद्यालाभः कुतोऽपि हि ।
स्वजातिलज्जया गेहं त्यक्त्वा देशान्तरं भ्रमन् ॥३३५॥
अत्राऽऽयातस्तदूर्ध्वं तु प्राच्यभाग्यवशादभूत् ।
यत् किञ्चिदिह तत्सर्वं तवैव विदितं विभो ! ॥३३६॥
( युग्मम् )
पितुः परिभवादत्राऽऽयातोऽहमपि पर्यटन् ।
दृष्टोपलक्षितस्तेन मर्मज्ञ इति संभ्रमात् ॥३३७॥
पुरस्त्वरितमाकार्य मा मामुद्घाटयेरिति ।

आज्ञां दत्त्वा विशेषेण संमान्य स्थापितोऽन्तिके ॥३३८॥
नितान्तममुना कर्णविषेण व्याकुलीकृतः ।
नृपो दध्यौ हहा ! कीदृक् संजातमसमञ्जसम् ॥३३९॥
पणबद्धाममूं कन्यां बाढं गृह्णातु, मेऽखिलम् ।
यत्पुनर्मलिनीचक्रे राज्यं दुःखाकरोति तत् ॥३४०॥
तदेनं निग्रहीष्यामि पापमित्यात्तनिश्चयः ।
आदीदिशत स रहो भृत्यान् यत् कृत्यादेशकारिणः ॥३४१॥
आदिशञ्च य एकाकी निशि सौधाऽन्तराऽध्वना ।
एति वध्यः स युष्माभिर्निर्विचारमुदायुधैः ॥३४२॥
देवाऽऽदेशः प्रमाणं मे इति व्याहृत्य ते नराः ।
ततो गत्वाऽभूवन् राज्ञो निदेशकरणोद्यताः ॥३४३॥
अथ वर्षसमं नीत्वा दिनं राजा महानिशि ।
शिक्षयित्वा नरं प्रैषीत् कुमाराऽऽह्वानहेतवे ॥३४४॥
सोऽपि गत्वाऽवदद् देव ! नृदेवस्त्वां दिदृक्षते ।
कार्यौत्सुक्यात् ततो मध्यमार्गेणैव समेयताम् ॥३४५॥
खड्गमादाय पल्यङ्कादुत्थाय सहसाऽचलत् ।
कुमारः प्रिययाऽभाणि करे धृत्वा पटाऽञ्चलम् ॥३४६॥
देव ! मुग्धस्वभावोऽसि राजनीतिं न वीक्षसे ।
इयत्यामविचार्यैव यदेवं चलितो निशि ॥३४७॥
एतदेव कुलीनानां जीवितव्यं प्रिये ! नृणाम् ।
निर्विकल्पं परीक्ष्याऽऽज्ञां यदादेशो विधीयते ॥३४८॥
विकल्पेन पुनस्तस्मिन् भक्तिव्याजाद् विडम्बना ।
इति शिष्टे कुमारेण राजपुत्री पुनर्जगौ । ३४९॥
सत्यमेतत् परं क्वापि विकल्पोऽप्युचितः प्रिय ! ।
जैनदर्शनवन्नैव सिद्धिरेकान्तपक्षतः ॥३५०॥
ऋजुता धन्व-गुणयोरस्तु वस्तुस्वरूपतः ।

---

१ हूंग् स्पर्धाशब्दयोः । २ स्वामित्यर्थः ।

कार्यसिद्धौ प्रशस्येत वक्रतैव तयोः पुनः ॥३५१॥
अन्यच्चित्तेऽन्यथा वाचि कर्त्तव्यं त्वन्यदेव हि ।
गणिकाक्रमवन्नाथ ! राजधर्मोऽप्यनेकधा ॥३५२॥
विश्वासोऽत्र न कर्त्तव्यस्तन्नरेण विजानता ।
नीतौ किं न श्रुतं राजा मित्रं कस्याऽपि नो भवेत् ? ॥३५३॥
अकारणप्रसादोऽपि प्रस्तावं न विना शुभः ।
अरिष्टाय तरोः पुष्पोद्भेदोऽप्यऽसमये भुवि ॥३५४॥
यथा दाहभयाद् देव ! ध्रियते दारुहस्तकः ।
फलकं घातरक्षार्थं प्रस्तावार्थं तथाऽनुगः ॥३५५॥
आस्ते समस्तकृत्येषु प्रधानस्तव सज्जनः ।
स एव प्रेष्यतां ज्ञात्वा कार्यं कुर्याद् यथोचितम् ॥३५६॥
दयितायाः स तादृक्षमिक्षुरम्भाफलोपमम् ।
वचः श्रुत्वा परं तोषाऽऽपूरितो हृद्यऽचिन्तयत् ॥३५७॥
कुलव्रतधरा नारी नरस्य यदि जायते ।
तदा सैव गुरुर्लक्ष्मीः शास्त्रं मित्रं मतिः सखा ॥३५८॥
अहो ! केयं मतिप्रौढिरस्याः कीदृक् वचःक्रमः ।
पक्षपातः सरस्वत्याः स्त्रीजातित्वादियं ध्रुवम् ॥ ३५९ ॥
प्रहितः सज्जनश्चाथ व्रजन् सौधाऽन्तराऽध्वना ।
तत्रस्थपुरुषैः तीक्ष्णखड्गघातैर्दृढं हतः ॥ ३६० ॥
अपतच्च हताशत्वादऽसावुभयथाऽप्यधः ।
सत्यमाभाणको जातः स्वस्य स्याच्चिन्तितं परे ॥ ३६१ ॥
श्रुत्वा कलकलं तत्र ज्ञात्वा च नृपपुत्रिका ।
पूरिता शोक-हर्षाभ्यां जगादेति सगद्गदम् ॥ ३६२ ॥
हा ! नाथ ! सरलस्वच्छप्रकृते ! कथितं यदि ।
नाऽकरिष्यः तदाऽवस्था काऽभविष्यन्ममाऽधुना ? ॥३६३॥
आर्यपुत्र ! तदद्यापि मुक्त्वा गजनिमीलिकाम् ।
भूत्वा स्वसैन्यसन्नद्धो बहिस्तिष्ठ पुरादरम् ॥ ३६४ ॥

तथैव विहिते तेन विदित्वा तन्नृपोऽपि हि ।
स्पष्टकोपो बलाटोपं कृत्वा सज्जो युधेऽभवत् ॥३६५॥
प्रसरत्तरलोत्तुङ्गतरङ्गाभतुरङ्गमे ।
दृश्यमानमहामानमत्तमानङ्गपर्वते ॥ ३६६ ॥
करालमकराकारवरूथिरथसंकुले ।
स्फुरच्चारभटाऽनेकनक्रचक्रभयङ्करे ॥ ३६७ ॥
डिण्डीरपिण्डसंकाशच्छत्रकाङ्क्षविराजिते ।
महाकलकलध्वानपूरितव्योममण्डले ॥ ३६८ ॥
दुर्वातक्षुभितोत्तालपूर्वापरसमुद्रवत् ।
प्राणिक्षयाय सञ्जाते संग्रामे सैन्ययोर्द्वयोः ॥ ३६९ ॥
मन्त्रिभिश्चिन्तितं हन्त ! सत्स्वप्यऽस्मासु यद्यसौ ।
राज्ञा संहार आरेभे ततो जीवन्मृता वयम् ॥ ३७० ॥
( पञ्चभिः कुलकम् )
पुष्पैरपि न योद्धव्यं प्रबुद्धेन यथा तथा ।
अयं ह्यवसरोऽस्माकं तन्निवारणकर्मणि ॥ ३७१ ॥
सर्वे समुदितीभूय पश्चात्कृत्य बलद्वयम् ।
उपाऽसर्पन् नृपं नत्वा तेष्वेक इदमूचिवान् ॥ ३७२ ॥
कलानामिव शीतांशुर्नदीनामिव सागरः ।
निधिस्त्वमेको विद्यानां देव ! संप्रति भूतले ॥ ३७३ ॥
यथा च नृषु राजा त्वं विवेकश्च गुणेष्वयम् ।
अविमर्शो महानेष दोषो दोषेष्वयं तथा ॥३७४॥
शल्य-वह्नि-विषादीनां सुकरैव प्रतिक्रिया ।
सहसाकृतकार्योत्थाऽनुतापस्य तु नौषधम् ॥३७५॥
गुरुत्वं च लघुत्वं श्रीभावाऽभावतां जडाः ।
वदन्ति तत्पुनर्दक्षाः सद्विवेकाऽविवेकतः ॥ ३७६ ॥
निर्विवेकनरं नारी प्रायोऽन्याऽपि न काङ्क्षति ।
किं पुनः श्रीरियं देवी पुरुषोत्तमवल्लभा ? ॥३७७॥

निजपत्युर्निरीक्ष्यांऽशं श्रीरियं श्रयते नृपम् ।
तमनेनाऽविवेकेन मा हारय नरोत्तम ! ॥३७८॥
उक्तं च–
अविज्ञातविशेषस्य सर्वतेजोऽपहारिणः ।
स्वामिनो निर्विवेकस्य तमसश्च किमन्तरम् ? ॥३७९॥
कुदृष्टं कुश्रुतं चाऽपि कुज्ञातं कुपरीक्षितम् ।
कृत्वा कार्यं पुरा देव ! बहवः प्रापुरापदम् ॥३८०॥
सहसाकारिणं सद्यो मुञ्चन्ति सुखसंपदः ।
इत्यर्थे श्रूयतां देव ! जयराजो निदर्शनम् ॥३८१॥
तथाहि–
अस्ति विन्ध्याचलासन्नभूमिभागे महाटवी ।
अधृष्या हरि-भल्लूक-शार्दूल-सरभादिभिः ॥३८२॥
अभिगम्या च हिन्ताल-सरलाऽ-ञ्जन-चन्दनैः ।
आम्र-जम्बू-प्रियालाद्यैर्बकुला-ऽशोक-चम्पकैः ॥ ३८३ ॥
तस्यामुत्सङ्गविस्तीर्णो नानालीनविहङ्गमः ।
वटवृक्षोऽस्ति तत्रैकं युग्मं वसति कीरयोः ॥ ३८४ ॥
तयोर्निर्वृतिसारेण सुखेन समयं सदा ।
सस्नेहं निर्गमयतोः शुकापत्यमजायत ॥३८५॥
पित्रोः पक्षाऽनिलस्वेदचूर्णिदानादिना क्रमात् ।
वर्धमानो बभूवाऽसौ किञ्चिदुद्भिन्नपक्षतिः ॥३८६॥
अन्यदा बालचापल्यादुड्डीय गमनोत्सुकः ।
कियद् दूरं गतो मार्गाऽन्तराले सहसाऽपतत् ॥३८७॥
श्रान्तो व्यात्तमुखो बिभ्यत् सलिलायाऽऽगतेन सः ।
दृष्ट्वा तपस्विनैकेन गृहीतः कृपया करे ॥३८८॥
वीजयित्वा वल्कलेन पाययित्वा कमण्डलोः ।
जलमाश्वास्य निन्येऽसौ तापसेन निजाऽऽश्रमम् ॥३८९॥
पुत्रवत् पोषितः स्वादुनीवारफलवारिभिः ।

संभूय मुनिभिश्चक्रे शुकराज इति प्रथा ॥३९०॥
सल्लक्षणधरो ज्ञात्वाऽऽदेशात् कुलपतेः शुकः ।
पाठितः शिक्षितश्चासौ तापसैर्हृष्टमानसैः ॥३९१॥
पितरावपि तन्मोहाद् तत्रैवाऽऽगत्य तस्थतुः ।
अन्यदा निजशिष्याणां पुरः कुलपतिर्जगौ ॥३९२॥
द्वीपो वारिनिधेर्मध्ये हरिमेलाऽभिधो वरः ।
तिष्ठतीशानकोणेऽस्य सहकारो महाद्रुमः ॥३९३॥
देव-दानव-गन्धर्व किन्नर-व्योमचारिणाम् ।
मिथुनैः सेवितच्छायः सुधासिक्तः सदाफलः ॥३९४॥

( युग्मम् )

देवाऽनुभावात् तस्योपजीवति स्वादु यः फलम् ।
दोषरोगजरामुक्तः स्फुटं स्यात् स पुनर्नवः ॥३९५॥
शुकोऽपीदं वचः श्रुत्वा दध्यौ हृष्टमना भृशम् ।
ध्रुवं मदर्थमेवेदं व्याख्यानं विदधे गुरुः ॥३९६॥
दृष्टिभ्रष्टौ जराजीर्णौ यद् मातापितरौ मम ।
तदाम्रफलदानेन किंचित् स्यामऽनृणस्तयोः ॥३९७॥
किं तेन जातु जातेन पृथिवीभारकारिणा ।
आस्तामऽन्यस्य पित्रोरप्याशां पूरयते न यः ? ॥३९८॥
स पुत्रो यः पितुर्मातुर्भूरिभक्तिसुधारसैः ।
निर्वापयति संतापं शेषस्तत्कृमिकीटकः ॥ ३९९ ॥
उक्तं च कुलपतिना–
मातृपित्रोरऽभर्त[1]कः क्रियामुद्दिश्य याचकः ।
मृतशय्याप्रतिग्राही न भूयः पुरुषो भवेत् ॥ ४०० ॥
वरं वृक्षोऽपि सिक्तोऽसौ यस्य विश्रम्यते तले ।
सचेतनोऽपि नो पुत्रो यः पित्रोः क्लेशकारकः ॥४०१॥

१ अपोषकः ।

उच्यन्ते दुष्प्रतीकारा यत्रऽप्यऽम्बा पिता गुरुः ।
नरैस्तथाऽपि यत् शक्यं कृत्यं तेषां पदाऽर्चनम् ॥४०२॥
पूज्यपूजनबीजोत्थः स्फुटं भाग्यद्रुमो नृणाम् ।
तद्भक्तिसलिलैः सिक्तः सदा सौख्यैः फलत्यऽलम् ४०३
इति ध्यात्वा शुकः कीराऽऽवापृच्छ्योड्डीय सत्वरम् ।
ययौ वार्ध्यन्तरद्वीपं तमेवाऽऽम्रं ददर्श च ॥ ४०४ ॥
प्रीतश्चारु फलं चञ्चुपुटेनाऽऽदाय तस्य सः ।
व्यावृत्य गगने गच्छन् शुकः श्रान्तोऽभवद् भृशम् ॥४०५॥
अशक्तः स्वां तनुं धर्तुं पपात सहसाऽम्बुधौ ।
नाऽमुचत् चञ्चुतस्त्वाम्रं चिन्तातत्त्वं सुधीरिव ॥४०६॥
अत्राऽन्तरे सागराख्यसार्थेशेन महापुरात् ।
यानेन गच्छता दृष्टो व्याकुलः स जले ब्रुडन् ॥४०७॥
अरे ! गृह्णातु गृह्णातु कोऽप्येनमिति संभ्रमात् ।
उदिते सागरेणैकस्तारकः स्वं जलेऽक्षिपत् ॥४०८॥
गत्वाऽन्तिके शुकं धृत्वा सागरस्य स चाऽऽर्पयत् ।
सागरोऽपि करे धृत्वा शुकमाऽश्वासयच्चिरम् ॥४०९॥
शुकोऽपि लब्धचैतन्यः सागरं प्रत्यभाषत ।
उपकारिशिरोरत्न ! सार्थवाह ! चिरं जय ॥ ४१० ॥
न केवलं त्वयैकोऽहं जीवितः सार्थनायक ! ।
मम पित्रोऽरपि प्राणा दत्ता जीर्णाऽन्धयोर्ध्रुवम् ॥ ४११ ॥
सूर्याचन्द्रमसौ व्योम्नः, द्वौ नरौ भूषणं भुवः ।
उपकारे मतिर्यस्य यश्च तं न विलुम्पति ॥४१२॥
उक्तं च–
परकार्याय पर्याप्तं वरं भस्म वरं तृणम् ।
परोपकृतिमाधातुमक्षमो न पुनः पुमान् ॥ ४१३ ॥
किमपि प्रार्थये तत् त्वां प्रार्थनायोग्य ! सत्तम ! ।
यद् योग्यं प्रार्थयस्वेति सागरोक्ते शुकोऽतुषत् ॥ ४१४ ॥

वृत्तान्तं सर्वमाख्याय तत्फलं दातुमुद्यतः ।
सागरेणोदितः कीरस्त्वत्पित्रोर्हन्त ! का गतिः ? ।४१५॥
सोऽप्याह गतभारत्वात् तत्र गत्वा पुनः फलम् ।
पूर्वं भुक्त्वा स्वयं पित्रोर्योग्यं नेष्यामि निश्चितम् ॥४१६॥
ततस्तत्प्रार्थनाभङ्गं सागरः कर्तुमक्षमः ।
जग्राहाऽऽम्रफलं कीरात् सोऽपि तुष्टः स्वमुद्ययौ ॥ ४१७॥
सागरोऽपि शुकं ध्यायन् चूतं यत्नेन धारयन् ।
क्रमाद् जयपुरं प्राप्तः स्वास्थित्याऽवासयद् बहिः ॥४१८॥
अचिन्तयच्च यदहो ! पक्षिणोऽपीदृशी मतिः ।
उपकर्तुं तदा मर्त्यभवे किं कृतमन्यकत्[1] ॥४१९॥
तत् किं कुक्षिंभरित्वेन ममैतत्फलभक्षणात् ।
तथा कुर्वे यथा विश्वविश्वस्योपकृतिर्भवेत् ? ॥ ४२० ॥
यतः-
तुन्दस्य भरणे नीचास्तुष्टाः, स्वीयस्य मध्यमाः ।
उत्तमा भुवनस्याऽपि सतां स्वपरता न हि ॥४२१॥
स च सर्वोपकारोऽत्र न हि विश्वाऽधिपं विना ।
तदऽत्र राज्ञो दास्येऽदो हृदीदं निश्चिकाय सः ॥४२२॥
न्यस्य मुक्ताभृतस्थालोपरिचूतफलं क्षणे ।
तदुपायनमादाय जगाम नृपधाम सः ॥४२३॥
आस्थाने नृपमद्राक्षीत् प्रतीहारनिवेदितः ।
मुक्तास्थालं पुरो मुक्त्वा साऽष्टाङ्गं प्रणनाम च ॥४२४॥
तस्मिन् यथासनासीने चूतं मुक्ताफलोपरि ।
भूपालो वीक्ष्य विस्मेरमुखः पप्रच्छ सादरम् ॥४२५॥
सार्थेश ! कियानऽर्घः फलमात्रस्य दृश्यते ।
कथं कदापि नो दृष्टः सहकारतरुस्त्वया ? ॥४२६॥
तत्प्रभावादिकं सर्वं कथयामास सागरः ।

---

१ अन्यत् ।

अतिप्रीतो नृपस्तस्य सन्मानं बहऽकारयत् ॥४२७॥
आकार्याऽऽरामिकं स्वीयं शिक्षयित्वाऽतियत्नतः ।
रोपणायाऽऽर्पयद् राजा तदाऽऽम्रं सह यामिकैः ॥४२८॥
सोऽपि गत्वा शुभस्थाने विधिना परिकर्मवित् ।
सिञ्चते रोपयित्वाऽऽम्रं सदाऽऽत्मानमिवाऽऽत्मवित्॥४२९॥
क्रमेणाऽङ्कुरमुद्भिन्नं श्रुत्वा नृपतिरुत्सवम् ।
मुदा तत्र सुपुत्रस्य जन्मेवाऽकारयत्तराम् ॥४३०॥
भक्तवस्त्रादिसत्कारैस्तोषयामास पूर्जनान् ।
विशेषेण तदेकाग्रचित्ताऽऽरामिकयामिकान् ॥४३१॥
स्वयं याति नृपो द्रष्टुं पल्लवे पल्लवेऽनिशम् ।
वर्धमाने प्रवर्धन्ते राज्ञो हृदि मनोरथाः ॥४३२॥
कन्दलस्कन्धशाखासु वर्ण्यमानासु भूपतिः ।
तन्न यन्नेप्सितं दत्ते शक्रंमन्यो मुदा हृदि ॥४३३॥
एवं सर्वाङ्गरम्यस्य सौभाग्यस्येव मञ्जरी ।
प्रादुर्बभूव चूतस्य तस्य विश्वदृशां सुधा ॥४३४॥
फलैश्चाऽलङ्कृतो भूरिभाग्यस्याऽऽरम्भवत् तरुः ।
मन्यते स्म जनं राजा गतरोगजरापदम् ॥ ४३५ ॥
अथैकस्य पपाताऽऽम्रफलस्योपरि पुष्करे[1] ।
व्रजत्शकुन्तिकात्तस्य सर्पस्य गरलं मुखात् ॥४३६॥
सद्यः पक्वं च तत् तेन गलित्वा चाऽपतद् भुवि ।
तद् नीत्वाऽऽरामिकस्तुष्यन् राज्ञोऽद्भुतमढौकयत् ॥४३७॥
प्रसाददानं कृत्वाऽस्य नृपो निजपुरोधसे ।
आद्यमिष्टेऽस्त्विति ध्यात्वा ददावाम्रं सगौरवम् ॥ ४३८ ॥
सोऽपि गत्वा निजावासे कृत्वा देवार्चनं मुदा ।
तदाम्रं भक्षयामास सहसा च विपन्नवान् ॥४३९॥
शोककोलाहले तत्र जाते ज्ञात्वा नराधिपः ।

---

१ गगने ।

